of his emanations. But for the clumsy and somewhat coarse face of the main figure the sculpture will pass as one of the first class specimens of Indian art. The execution of proportions, details and the placing of the different deities at regular distances are some of the features of the image worthy of appreciation.

To identify let us again turn to page 176 of the text where we meet with the description of a goddess known as Khadiravaṇī Tārā which corresponds with the present figure in all details. There we read of Tārā described as :—

हरितां अमोघसिद्धिमुकुटीं वरदोत्पलधारिदक्षिणवामकरां अशोककान्तामारीच्येकजटाव्यग्रदक्षिणवामदिग्भागां दिव्यकुमारीं अलङ्कारवतीम् ।

Thus the figure under discussion must be identified with Khadiravaṇī Tārā, one of the many varieties of Tārā because she bears the miniature figure of Amoghasiddhi on her crown, as also because she shows the Varada mudrā in the right hand and carries the Utpala in the left hand and is accompanied by two goddesses Aśokakāntā Mārīcī and Ekajaṭā on the two sides. The distinguishing symbol of Aśokakāntā is the Aśoka while the Kartri and Kapāla point to Ekajaṭā.

### 18. *Mahāśrī Tārā* (*Pl. XIX*).[1]

This picture and the last one in this series presents a very interesting specimen of Indian sculptural art. In this image a goddess is represented as sitting in the Lalitāsana with the right leg dangling below and resting on a lotus the left remaining on the lotus seat. The figure shows the Dharmacakra mudrā against the breast and from under the two armpits rise the blue lotus in the left, and an ordinary lotus in the right. The figure

[1] From a photo supplied by the Indian Museum, Calcutta.



**MAHASRI TARA** (महाश्री-तारा)

(*Indian Museum*).

is profusely decorated with rich ornaments, such as a lovely tiara on the head and the necklace, bracelets, armlets, anklets, etc., arranged artistically in their appropriate places. It is clothed in beautiful and rich muslin made more attractive by the stripes at intervals, and held fast by the richly bejewelled girdle. The upper limbs are covered by a jacket to match the cloth of the undergarment. The principal figure is accompanied by two more figures on the two sides; below the lotus seat, again, there are two more, and as all of them have lotus seats, they must be taken as companion goddesses. On the top, arranged in a semicircle, are to be seen the five miniature figures of the five Dhyāni Buddhas the central place being occupied by Amoghasiddhi to show that the principal goddess is one of his emanations. The whole piece of sculpture is an admirable product of Indian art; it is profusely but delicately ornamented. All figures have clear and bold outlines, the symbols are definite and clear cut and the execution in these matters may be said to be perfect. The principal figure has a sharp but serene and peaceful appearance and is pervaded with a divine dignity. The limbs are delicate, fleshy but not flabby or fat and therefore, symbolize perfect health. The slender beauty of form, the forcible but delicate expression and the superb dignity of the goddess make the image one of the finest productions of Oriental art and a worthy rival of the celebrated image of Prajñāpāramitā from Java.

To identify the sculpture which represents the Maṇḍala of a goddess let us again turn to p. 244 of the text where we meet with a description of Mahāśrī Tārā which corresponds in every detail with that of the present image. There she is described as:—

महाश्रीतारां चन्द्रासनस्थां श्यामवर्णां द्विभुजां हस्तद्वयेन व्याख्यानमुद्राधरां एकवक्त्रां सर्वालङ्कारभूषितां पार्श्वद्वयेनोत्पलशोभां सुवर्णसिंहासनोपरि

अपा(आपादा ?)श्रयादिशोभां नानापुष्पाशोकचम्पकनागेश्वरपारिजातकादिभी-राजितममोघसिद्धिमकुटिनीम् ।

महाश्रीतारायाः पार्श्वे एकजटामर्द्धपर्यङ्कोपविष्टां नीलवर्णां कर्त्रिकपाल-धरां सक्रोधां लम्बोदरां पिङ्गलजटाविभूषितां व्याघ्रचर्माम्बरधराम् ।

दक्षिणे पार्श्वे अशोककान्तां पीतवर्णां रत्नमुकुटिनीं वज्राशोकधराम् ।

पुनर्वामे आर्यजाङ्गुलीं श्यामवर्णां सर्पवरदहस्ताम् ।

दक्षिणे महामायूरीं मयूरपिच्छवरदहस्ताम् ।

Thus when we compare the description with the image we find that the Vyākhyāna mudrã, the two lotuses on either sides, the parental Dhyāni Buddha Amoghasiddhi and four companions are common to both and therefore, the identification is definite and unquestionable. To the right of the goddess we see the familiar figure of Aśokakāntā carrying the Vajra and the Aśoka flowers in the right and left hands respectively, and to the left likewise is seen the fierce figure of Ekajaṭā carrying the Vajra and the Kapāla in the two hands, and sitting in the Ardhaparyaṅka attitude. In the two figures below, the symbols unfortunately are not properly distinguished, but they represent according to the Sādhana the goddesses Mahāmāyūrī in the right and Āryajāṅgulī in the left, carrying the peacock's feather and the serpent respectively.

* * * *

These few examples will show the potency of the Sādhana in elucidating the meanings of the images and identifying them. But these are not all, and there are many more Dhyānas hidden in the Tāntric sculptures of the Buddhists as well as of the Hindus, and to-day there are hundreds of unidentified images amongst those hitherto discovered. Many Sādhanas are lost in the original Sanskrit and their translations are preserved in the Tibetan Tangyur. It is extremely necessary, therefore, that the attention of scholars should be drawn to

this branch of study which may at first seem very uninteresting, but is likely to yield great historical information, because we should not forget that the cultural history of India for the whole of the Tāntric period from the 7th century to the advent of the Muhammadans in India is locked up in this mass of uninteresting and apparently much neglected and much hated literature of Tāntrism.

# विषयानुक्रमणिका ।

# साधनमाला ।

## द्वितीयो भागः ।

171.

नमस्तारोद्भवकुरुकुल्लायै ।

प्रथमं तावन्मन्त्री क्वचिन्मनोहरे स्थाने मृदुमस्तूरकाद्युपविष्टः पटादिगतां भगवतीमवतार्य्य बाह्यपूजां कृत्वा स्वहृदि निर्म्मलं पूर्णचन्द्राभमादिस्वरसमुद्भवं चन्द्रं विभाव्य बीजं [1]तस्योपरि न्यसेत् ।

ऊष्माणां च चतुर्थं तु अग्निवर्णोपरि स्थितम् ।
ईका[2]रेण समायुक्तमाकाशद्वयभूषितम् ॥
तस्य चित्रमयूखाभिः कृत्वा [3]निर्म्मलिनं जगत् ।
सत्त्वादिधातुकं शोध्य कुरुकुल्ल[4]पर्व्वते गताम् ॥
सञ्चोद्य च तथा तारामानयित्वा पुरश्चरेत् ।
तस्माद् बीजात् महापूजामेघांश्च स्फारयेद् बुधः ॥
पुष्पधूपतथादीपगन्धनैवेद्यसञ्चयैः ।
लास्यमाल्यनृत्यगीतवाद्यपूजादिभिस्तथा ॥

---

[1] A यस्यो० ।
[2] A इका० ।
[3] AC निर्म्मलं ।
[4] A ०पूर्णा ।

रत्नत्रयं मे शरणं सर्व्वं प्रतिदिशाम्यघम् ।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः ।
इति मन्त्रं त्रिधा वाच्यं ततः[1] क्षन्तव्यामि[2] त्यपि ॥

तत्रेयं गाथा—

यत् कृतं दुष्कृतं किञ्चित् मया मूढधिया पुनः ।
क्षन्तव्यं तत् त्वया देवि यतस्त्राताऽसि देहिनाम् ॥
चित्तं मैत्री विहारे [च] निवेष्टव्यं पुनस्तदा ।
करुणाचित्तमुत्पाद्य प्रमोदचित्तमावहेत् ॥
पश्चादुपेक्षते सर्व्वं चित्तमात्रव्यवस्थया ।
चित्तं शून्यं ततः कुर्य्यात् प्रकृताकारहानये ॥
शून्य[4]तावह्निना दग्धाः पञ्चस्कन्धाः पुनर्भवाः ।
[पठित्वा] ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम् ॥
मुहूर्त्तं शून्यतायोगं कुर्य्यात् चित्तस्य विश्रमम् ।
प्रतिज्ञां प्राक्तनीं स्मृत्वा बीजमात्रं पुनः स्मरेत् ॥
प्रतारिता मया सत्त्वा एकान्तपरिनिर्वृताः ।
कथं तान् उद्धरिष्यामि अगाधाद् भवसागरात् ॥
इति सत्त्वकृपाविष्टो निश्चेष्टां शून्यतां त्यजेत् ।
धर्म्मधातुमयं चित्तमुत्पादयति चेतसा ॥
बुद्धाधिष्ठानतो बीजमुत्पलाख्यं ततो भवेत् ।
उत्पले चन्द्रबिम्बं तु [5]अकारस्वरसम्भवम् ॥
तस्मिंश्चन्द्रे पुनर्बीजं तस्माद् गभस्तयो गताः ।
ताभिर्वि[6]शोधिता ध्येया निःशेषा लोकधातवः ॥

---

[1] A omits.
[2] A इ० ।
[3] A omits.
[4] A ० ताह्निना ।
[5] AC तांका० ।
[6] AC अभिनिवे०

शोध्यं बोध्यं तथा सर्व्वं रश्मिभिर्बुद्धकोटयः ।
[1]विशतस्तानुत्पन्ने ध्यायात् ततस्तारोदयो भवेत् ॥
चतुर्भुजां रक्तवर्णां रक्तपद्मासनस्थिताम् ।
रक्तवस्त्रयुगां भव्यां रक्तताटङ्कमौलिकाम् ॥
सव्यभुजाभ्यामभयं शरं च दधतीं पुनः ।
अवसव्यद्वितये चापरक्तोत्पलधारिणीम् ॥
कुरुकुल्लाद्रिगुहा[2]न्तस्थामारो[3]लिकमौलिकाम् ।
रक्तपद्मासनाधस्तात् राहुस्तस्यो[4]परि स्थितः ॥
कामदेवः सपत्नीको भावनीयोऽतिविह्वलः ।
राहोरुपरि सपत्नीककामदेवस्थितासनाम् ।
वज्रपर्य्यङ्किनीं तत्र सर्व्वचित्रकलावतीम् ॥
ध्यात्वा भगवतीं सम्यक् सर्व्वालङ्कारभूषिताम् ।
समयमूर्त्तिं समासाद्य ज्ञानचक्रं समाह्वयेत् ॥
झटित्याकारनिष्पन्नं ज्ञानचक्रं पुरःस्थितम् ।
जः हुँ वँ होरित्या(नेना)कृष्य प्रवेश्य बद्धा तोषयेत् ॥
समयमुद्राप्रयोगेण [5]सुखमार्गे निवेशयेत् ।
पाणिभ्यामञ्जलिं कृत्वा मांस[6]लौ नामितौ यदा ॥
दीर्घाभ्यां[7] तु कृता सूचिः [8]सूचिमध्ये त्वनामिके ।
लताभ्यां मध्यमौ श्लिष्टौ द्वावङ्गुष्ठावधोगतौ ॥
अनेन बन्धयेत् समयो(नया) ज्ञानचक्रं प्रवेशयेत् ।
ततोऽभिषेकं प्रार्थयेत् बुद्धानिति[9] पठन् कृती ॥

---

[1] AC निर्गत० ।
[2] AC ०ल्लादिग्रहा० ।
[3] A मालो० ।
[4] AC रासभस्यो० ।
[5] AC मुख० ।
[6] AN ०लैर्नमितौ ।
[7] N दीपाभ्यां ।
[8] AC omit सूचि० ।
[9] The MSS add गाथां after this, which makes the metre faulty.

बोधिवज्रेण बुद्धानां यथा दत्तो महामहः ।
ममापि चाणनार्थाय खवज्राद्यं ददाहि मे ॥
ते ददन्ति महद्भूता राज्या[1]भिषेकनामतः ।
पुष्पाभिषेकवत्प्राज्ञः पञ्चभिर्लोचनादिभिः ॥
अभिषेकं महावज्रं त्रैधातुकनमस्कृतम् ।
ददामि सर्व्वबुद्धानां त्रिगुह्यालयसम्भवम् ॥
बुद्धाभिषेकतस्ताराधर्म्मचूडामणिर्भवेत् ।
रक्तचित्तप्रभाभाभिर्भास[2]यन्ती जगत्त्रयम् ॥
प्राप्ताभिषेकरत्नस्तु सर्व्वसिद्धिं प्रसाधयेत् ।
वर्षार्द्धं च दृढावेशात् यथोक्तविधिना पुरः ॥
त्रिसन्ध्यासु बलिं दत्त्वा भावनाक्रमपूर्व्वकः ।
ताराहृदयेनानेन जपेत् मन्त्रं समाहितः ॥

ॐ कुरुकुल्ले ह्रीः[3] हुँ स्वाहा । ततः पूर्व्वसेवामक्षरलक्षं जप्त्वा पश्चात् कर्म्म समारभेत् ।

अंशे[4]न वर्द्धते प्रज्ञा अपरांशेन वश्यकृत् ।
अंशेनैव तृतीयेन विषाकर्षी[5] भवेन्नरः ॥

सर्व्वस्य लोकस्य भवेत् स पूज्यः[6]
स्त्रीणां मदेनापि हि [7]गर्वितानाम् ।
यथेच्छया [8]मन्त्री वरो विभुङ्क्ते
अभ्यासयोगात् सुरसुन्दरीणाम् ॥

---

[1] A मह्या० C सह्या० ।
[2] AC भ्रेम० ।
[3] A क्रीँ ।
[4] AC अङ्के० ।
[5] AC ०कर्षं ।
[6] A सम्पुटा ।
[7] AC गर्भिणीनां ।
[8] NCB मन्त्रधरो ।

ह्रीःकारं मदनातपत्रनिहितं स्त्रीणां भवेत् स्रावकं
जिह्वायां च तदेव बुद्धिजननं हृन्मध्यके चैव तत् ।
दुष्टानां परिभावितं विषहरं धर्म्माक्षरं स्वक्षरं
तारायाः हृदयं त्रिलोकविजयि ज्ञेयं कृपाशालिभिः ॥

कुरुकुल्लां विभाव्य स्वां तारो[1]द्भूतां सरोरुहे ।
साध्यमन्तर्गतं कृत्वा भावयेत् कामविह्वलाम् ॥
ज्ञानसत्त्वाब्जपीयूषधारां तन्मूर्द्ध्नि चिन्तयेत् ।
पतन्तीमिति सप्ताहं त्रिसन्ध्यं भावयेत् कृती ॥
क्रमाभ्यासात् क्षुद्रसिद्धिं साधयित्वा विचक्षणः ।
साधयेच्च महासिद्धिं सर्व्वथा नात्र संशयः ॥

॥ कल्पोक्ततारोद्भवकुरुकुल्लासाधनं समाप्तम् ॥

---

## 172.

नमस्तारोद्भव[2]कुरुकुल्लायै ।

यस्याः स्मरणमात्रेण सदेवासुरमानुषाः ।
ध्रुवं किङ्करतां यान्ति तां नमस्यामि तारिणीम् ॥

प्रथमं तावन्मन्त्री क्वचि[3]न्मनोऽनुकूले स्थाने स्त्रीजनसंसर्गादिरहि[4]ते सुखा[5]सीनः स्वहृदि प्रथमस्वरपरिणतचन्द्रमण्डलोपरि सरश्मिकह्रीः[6]कारबीजविनिर्गतरक्तमयूखसमूहैर्जगदवभासनपूर्व्वकं कुरुकु[7]ल्लपर्व्वतस्थितकुरु-

---

[1] N स्वभावो० ।
[2] Ab adds ०कल्पाम्नायोक्तक्रमाय before कुरु० ।
[3] Ba न्मनोहरेस्त्वल्ये ।
[4] Ab ०तेन ।
[5] Bb सुखासना० ।
[6] Ab ०कारनिःसृत० ।
[7] Ab omits ०ल्लपर्व्वत ...... सच्चिन्त्य ।

कुल्लां भगवतीं सञ्चोद्यानीय [1]पुरतो [2]गगनदेशे सञ्चिन्त्य हृद्बीजरश्मिनिर्म्मितविविधपुष्पधूपादिपूजाभिः पूजयेत्। तदनु वन्दना पापदेशना पुण्यानुमोदना परिणामना त्रिशरणगमनं बोधिचित्तोत्पा[3]दपूर्व्वकम्—

रत्नत्रयं मे शरणं सर्व्वं प्रतिदिशाम्यघम्।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः॥

इति त्रिधा पठेत्। ततश्चतुर्ब्रह्मविहारभावनापूर्व्वकं सर्व्वधर्म्मशून्यतां विभाव्य तदधिष्ठानमन्त्रं पठेत्— ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। तदनु सकलं जगत् दुःखितं करुणयाऽवलम्ब्य स्वचित्तं बीजरूपमवलोक्य तत्परिणतं रक्तकुवलयोपरि प्रथमस्वरपरिणतचन्द्रस्थित-बीजरश्मिभिः पूर्व्ववत् जगदवभास्यानन्ततथागतकोटीः सञ्चोद्यानीयान्तर्भावयेत्। तदुत्पलादिपरिणतां रक्तवर्णां रक्तपद्मचन्द्रासनां रक्तपट्टांशुकोत्तरीयां रक्तप्रभावलयां रक्तता[4]टङ्ककिरीटिनीं चतुर्भुजां सव्ये अभयप्रदां द्वितीये समापूरितशरां वामे रत्नचापधरां द्वितीये रक्तोत्पल-धरां अमिताभतथागतमुकुटां[5] कुरुकुल्ल[6]पर्व्वतगुहास्थित-राहुमस्तकस्थितसपत्नीककामदेवोपरिस्थितां शृङ्गार-रसान्वित[7]प्रथमयौवनोपेतां कुरुकुल्लां भावयेत्। [8]एवं समयसत्त्वं निष्पाद्य झटिति ज्ञानसत्त्वं पुरतः समानीय

---

[1] ANCBa पुरो।
[2] ANCAb गमन०।
[3] AbBa ०दन०।
[4] Ba ताड०।
[5] Ab ०टिनं।
[6] Ab ०कुल्ला।
[7] Ba रसोज्ज्वल०, Ab रसोल्वन०।
[8] AC omit एवं ... ०र्भावयेत्।

सम्पूज्य समयमुद्रया[1] सुखमार्गेण अन्तर्भावयेत् । तत्रेयं[2] समयमुद्रा— सम्पुटाञ्जलेर्मध्यमासूचिमध्ये अनामिके प्रवेश्य मध्यमापृष्ठे लताद्वयं संस्थितं द्वावङ्गुष्ठावधः प्रवेश्योत्पलमुद्रा तदाकारा । तदनु—

बोधिवज्रेण बुद्धानां यथा दत्तो महामहः ।
ममापि त्राणनार्थाय खवज्राद्यं ददाहि मे ॥

इति प्रार्थ्य—

अभिषेकं महावज्रं त्रैधातुकनमस्कृतम् ।
ददामि सर्व्वबुद्धानां त्रिगुह्यालयसम्भवम् ॥

इति पठन्तीभिर्बुद्धाज्ञया लोचनादिभिरभिषेकं दीयमानं ध्यायात् । मकुटे अमिताभो व्यवस्थितः । एवं भावनां कृत्वा जपं कुर्य्यात्, न द्रुतं न विलम्बितं नास्पष्टं न मात्राहीनं असत्सङ्कल्पवर्ज्जितम्— ॐ कुरुकुल्ले[4] ह्रीः हुँ स्वाहा । एवं त्रिसन्ध्यक्रमेण पिष्टक[5]शर्करादिबलिदानपुरःसरं [6]सादर[7]निरन्तरदृढावेशेन षण्मासान् भावयेत्, सिद्धिनिमित्तानि भवन्ति । तदनु प्रथमे मासे रोगाद्युप(द्रव)शमं भवति, द्वितीयमासे भोजनं प्रणीतमयाचितम्, तृतीये नानाविधवस्त्रलाभः, चतुर्थे ताम्बूलं नानाविधमनवरतं लभेत्, पञ्चमे विचित्ररूपादिगुणसमुदितस्त्री[8]सङ्गमः, षष्ठे मासे सदेवनागयक्षगन्धर्वकिन्नरादिदिव्य-

---

[1] Ab °मुद्रा ।
[2] Ab तत्रैवं ।
[3] NCBBa omit.
[4] AC क्रीँ स्वाहा, N क्रीः ऊः स्वाहा ।
[5] ANCBa पिष्ट° ।
[6] Ab omits सादर° ... °मयाचितं ।
[7] AC सावर° ।
[8] ANCBa °सङ्गः ।

स्त्रीसङ्गमः। प्रायेण भगवतीं भाव[1]यतः स्त्रीणामेवोपद्रवो भवति। तदेतानि मारकर्म्माणि परित्यज्य भावयतो भगवत्याः स्वप्ने साक्षात् वा प्रत्यादेशो भवति। खड्गाञ्जनपादलेपान्तर्द्धान[2]रसरसायनखेचरभूचर[3]पातालसिद्धिप्रमुखाः सिद्धीः साधयेत्। यदि प्रत्यादेशो न भवति तदा पूर्व्वोक्तमुद्रां बद्ध्वा पूजाबलिदानादिपूर्व्वकं षण्मासान्ते पूर्णमास्यां सकलां रात्रिं जपेत्। ततो ज्वलति सिद्धश्च भवति। तया मुद्रया [4]ब्रह्मेन्द्ररुद्रनारायणप्रभृतयः समाकृष्टाः समागम्य किङ्करतामुपगम्य साधकाभिलषितं सम्पादयन्ति। ततः प्रभृति जन्मजरामरणरहितः सिद्धो लोक[5]धातून् गत्वा तथागतान् पश्यति, भूमिधारण्यादिकं प्राप्नोति।

॥ मुक्तकेन तारोद्भवकुरुकुल्ला[6]साधनं समाप्तम् ॥

---

## 173.

नमः कुरुकुल्लायै।

आदौ मन्त्री सुखासनोपविष्टः स्वहृद्बीजरश्मिभिरग्रतो भगवतीं बुद्धबोधिसत्त्वांश्चानीय सम्पूज्य त्रिशरणगमना[7]दिकं कुर्य्यात्। ततः शून्यतामधिमुच्य मन्त्रेण-

---

[1] Ab ०येत्।

[2] ०रस० only in Ab.

[3] ACBa omit ०भूचर०।

[4] ANCBa ब्रह्मोपेन्द्र०

[5] ANCBa ०धातुं।

[6] Ab आर्य्यताराकल्पक्रमेण कुरुकुल्ला०।

[7] A omits ०गमन०।

धिष्ठाय अकारसम्भवचन्द्रमण्डले ताँ[1]कारं रश्मिमालिनं विचिन्त्य तत्परिणतां कुरुकुल्लां भगवतीं पश्येत् रक्तां रक्ताष्टदल[2]पद्मसूर्य्यासने वज्रपर्य्यङ्कनिषण्णां षड्भुजां सव्यावसव्यप्रथमभुजाभ्यां त्रैलोक्यविजयमुद्राधरां द्वितीय-दक्षिणवामकराभ्यां अङ्कुशरक्तोत्पलधरां परिशिष्टभुजद्वये-नाकर्णपूरितधनुःशरां रक्ताम्बरधरां[3] पञ्चतथागतमकुटिं साध्यस्य हृदि रक्तोत्पलवरटके चन्द्रमण्डले रक्तवर्णं [4]ताँकारं विभाव्य वायुमण्डलारूढं तं हृद्यङ्कुशेन विद्ध्वाऽऽनीय हृदये तस्योपविश्य रक्तोत्पलकलिकाशरेण साध्यं पुनः पुनः विध्यन् मन्त्रं जपेत् । तत्रायं मन्त्रः— ॐ कुरुकुल्ले [5]ह्रीः अमुकं मे वशमानय ह्रीः स्वाहा । ततस्तं विह्वलं वशीभूतं पादयो-र्निपतितं दृष्ट्वा प्रेषयेत् । एवं शक्रमपि वशमानयति ।

॥ इति [6]षड्भुजकुरुकुल्लासाधनम् ॥

---

## 174.

नमः कुरुकुल्लायै ।

पूर्व्व[व]त् शून्यतापर्य्यन्तं विभाव्य रेफेण परिणतसूर्य्ये[7] ह्रीःकारं [8]स्फारसंहारविग्रहं च ध्यात्वा [9]झटिति तत्परि-णामतः कुरुकुल्लां भगवतीं अष्टभुजां रक्तवर्णां रक्ताष्ट-दलपद्मसूर्य्ये वज्रपर्य्यङ्कनिषण्णां कूटागार[10]मध्यनिवासिनीं

---

[1] B अँक्रा० ।

[2] BAb omit रक्ताष्टदल० ।

[3] B omits.

[4] B अँक्रा० ।

[5] N क्रौः

[6] Ab omits षड्भुज० ।

[7] Ba ०सूर्य्यमण्डले ।

[8] Ab स्फुरणसंहरण० ।

[9] NAb झगिति ।

[10] Ba ०मध्ये ।

प्रथमकरद्वयेन त्रैलोक्यविजयमुद्राधरां अवशिष्टदक्षिण-करैः अङ्कुशं आकर्णपूरितशरं वरदमुद्रां दधानां परि-शिष्टवामभुजैः पाशं चापं उत्पलं दधानां सकलालङ्कार-वतीं भावयेत्। पूर्व्वदले प्रसन्नतारां दक्षिणदले निष्पन्न-तारां पश्चिमदले जयतारां उत्तरदले कर्णतारां ऐशानदले [1]चुन्दां आग्नेयदले अपराजितां नैर्ऋत्यदले प्रदीपतारां वायव्यदले[2] गौरीतारां च ध्यायात्। एताश्च सर्व्वा रक्त-वर्णाः पञ्चतथागतमुकुटा वज्रपर्य्यङ्कनिषण्णा दक्षिण-भुजाभ्यां वरदमुद्राऽऽकर्णपूरितशरधरा वामभुजाभ्यां उत्पलचापधराः। पूर्व्वद्वारे वज्रवेतालीं लम्बोदरां विकृतमुखीं रक्तवर्णां[4] अक्षोभ्यमुकुटां दक्षिणहस्ताभ्यां तर्ज्जन्यङ्कुशधरां वामकराभ्यां वज्रघण्टापाशधराम्, दक्षिण-द्वारे अपराजितां पीतवर्णां रत्नसम्भवमुकुटां दक्षिण-हस्ताभ्यां दण्डाङ्कुशधरां वामहस्ताभ्यां घण्टापाशधराम्, पश्चिमद्वारे एकजटां कृष्णवर्णां ऊर्द्ध्वकेशां लम्बोदरां दन्तावष्टब्धौष्ठां अमिताभमुकुटां दक्षिणकराभ्यां वज्रा-ङ्कुशधरां वामकराभ्यां घण्टापाशधराम्, उत्तरद्वारे वज्र-[5]गान्धारीं कनकश्यामां अमोघसिद्धिमुकुटां विकृतमुखीं लम्बोदरां दक्षिणभुजाभ्यां [6]खड्गाङ्कुशधरां वामभुजाभ्यां घण्टापाशधरां चिन्तयेत्। एताश्चतस्र आलीढपदस्थाः। तत्रेयं त्रैलोक्यविजयमुद्रा— तलौ पृष्ठलग्नौ, अनामिकाद्वयं ग्रन्थिं कृत्वा कनिष्ठां मध्यमाङ्गुष्ठेनावष्टभ्य तर्ज्जन्यौ

[1] A चून्दां।
[2] Ba वायव्ये।
[3] B °टिन्यः।
[4] A omits.
[5] ACAb °गन्धा°।
[6] Ab खट्वाङ्गा°

अङ्कुशाकारेण सलीलं ललाटदेशे धारयेत्। भावनाखिन्नो मन्त्रं जपेत्, ॐ कुरुकुल्ले ह्रीः[1] स्वाहा। अयुतजापेन सर्व्वे जना वश्या भवन्ति, नियु[2]तेन मन्त्रिणः, लक्षेण राजानः। उत्पलं घृतमध्वाक्तं [3]अश्वत्थसमिधश्च जुहुयात्, इष्टं पदं प्राप्नोति। श्रीफलकाष्ठेनाग्निं प्रज्वाल्य घृतमध्वाक्तानां [4]श्रीफलानां लक्षं [5]जुहुयात्, राजमन्त्रिणो वश्या भवन्ति इति। उत्पलसहस्रं जुहुयात्, घृतप्रदीपसहस्रं देव्या अग्रतो निवेदयेत्। सर्व्वे राजानो वश्या भवन्तीति।

॥ [6]अष्टभुजकुरुकुल्लासाधनं समाप्तम्।

। कृतिरियमिन्द्रभूतिपादानाम् ॥

---

175.

अथ मन्त्री स्त्रीपुरुषौ वशीकर्तुकामः शुक्लप्रतिपदमारभ्य त्रिसन्ध्यमयुतमेकं प्रत्यहं जपेत् भगवतीमवलम्ब्य रक्तवस्त्रं परिधाय गात्रं च प्रावृत्य। तत्रायं क्रमः—स्वहृदि रविस्थरक्तह्रीःकारजरक्ताष्टदलकमलं योनिपर्य्यन्तगतनालं विचिन्त्य तद्दलेष्व[7]ष्टसु भ्रमरानष्टौ आ ई ऊ ॠ ॡ[8] ऐ औ [9]अः इत्यष्टस्वरपरिणतान् अतिहृष्टपुष्टकुड्डरक्तवर्णाननुक्रमस्थितान् स्वनासिकापवन-

---

[1] ANC add हुं after this.
[2] N त्रियु०।
[3] AC आश्वथ०. Ba अश्वत्थेन।
[4] B omits.
[5] B जपेत्।
[6] B omits अष्टभुज०।
[7] A दलकमलानष्टौ०।
[8] ANC omit.
[9] ANC अं अः।

प्रेरितान् दृष्ट्वा स्ववामनासिकाविवरेण निःसृत्य साध्याया दक्षिणनासिकाविवरप्रविष्टानां लूनविशीर्णतया अ इ उ ऋ ऌ ए ओ अं इति ह्रस्वा[1]ष्टस्वरपरिणतान् तान् ध्यात्वा आकर्णपूरितरक्तोत्पलकलिकाशरनिकरैः साध्यायाः[2] किञ्जल्कं विद्ध्वा तत्परिणतशरानादाय तद्वामनासिकाविवरेण निःसृत्य योगी दक्षिणनासिकया[3] तान् स्वहृदि प्रविष्टान् विचिन्तयेत्। पश्चादुत्पलनालेन गलके बद्ध्वा योनिं च विद्ध्वा अङ्कुशेन पीडयित्वा रश्मिज्वालया परवशीकृत्य च तामारुह्य सानन्दो मन्त्रं जपेत्— ॐ कुरुकुल्ले ह्रीः अमुकीं मे वशमानय स्वाहा। सप्ताहात् सिध्यतीति।

॥ भ्रमरीयोगकुरुकुल्लासाधनम् ॥

---

## 176.

प्रणम्य कुरुकुल्लकां मातरं सिद्धिदायिनीम्।
उपदेशो लिख्यतेऽस्याः सर्व्वसिद्धिप्रदायकः।
कुरुकुल्लायोगयुक्तो भावयेदुपदेशकम्॥

हृत्सूर्य्यरक्तोत्पलकिञ्जल्कस्थितह्रीःकारनिर्गतपाशाङ्कुशोत्पलरूपैरंशुभिर्नासावामपुटेन निर्गत्य साध्यस्य दक्षिणपुटे प्रविश्य साध्यं ज्ञानदेहं रक्तवर्णं पाशेन गलके बद्ध्वा अङ्कुशेन हृदि विद्ध्वा नासापुटेन निश्चार्य्य [4]यँकारपरिणतवातमण्डलारूढः, उत्पलेन हृदि भगे वाऽऽताड्य

---

[1] A ऊत्वा०। [2] ANCBa साध्या०। [3] B ०काया। [4] N यँका०।

तमानीय वामपार्श्वे उत्तानं संस्थाप्य रश्मीन् स्वहृदि ह्रीःकारेण[1] दक्षिणपुटेन प्रवेशयेत् । पश्चात् पुनः हृद्बीजो-त्थितरक्तोत्पलाकाररश्मिरेखाभ्यन्तरेणैव भ्रूविवरमागम्य वामकर्णं संस्पृश्य मस्तकं वेष्टयित्वा दक्षिणकर्णविवरेण निर्गत्य तया कलिकारश्मिरेखया आकर्णाकृष्टोत्पल-कलिका[2]नालशरशुषिरे प्रवेश्य किञ्चित् कलिकामुखं विकाश्य[3] साध्यस्य लिङ्गे भगे वा ग्रसनन्यायेन मुहुर्मुहुः वेधयेत् । बीजेनेति केचित् । शराघातप्रविष्टरश्मिना सर्व्वाङ्गे व्याप्तं स्रवन्तं विह्वलं अशरणं पश्येत् । यदि उत्थितं ताडयेत् तदा स्वपादतले पतितं साध्यं विचिन्त्य पुनस्तथैव वेधमनुष्ठयेत् । यदा तु वेधनासमर्थो भवति तदा हृद्बीज[4]रन्ध्रे साध्यमुत्थाप्य नाभिकमलोपरि उत्तानं कृत्वा वामपार्श्वस्थमस्तकं संस्थाप्य बीजरश्मिना तुषार-कणासमूहवत् सर्व्वाङ्गव्याप्तं विह्वलीभूतं विचिन्त्य मन्त्र-मावर्त्तयेत्— ॐ कुरुकुल्ले ह्रीः स्वाहा । स्वाधिष्ठान-क्रमोपदेशश्चायमन्योऽपि ।

॥ कुरुकुल्लोपदेशक्रमः ॥

---

[1] AN ०कारे ।
[2] AC ०वासशरषिरे ।
[3] AC विहायास्य ।
[4] AC ०रश्मिनागतरन्ध्रे ।

## 177.

ॐ नमः कुरुकुल्लायै ।

प्रथमं सुखासनोपविष्टः कुरुकुल्लारूपं कृत्वा [1]सकलसत्त्वं वशं कर्त्तुमारभेत। स्वहृदि सूर्य्यमण्डलं तस्योपरि रक्तवर्णताँकारं ततः पञ्च रश्मयो निःसृत्य तथागतान् सम्पूज्य रत्नत्रयं मे शरणमित्यादिना पापदेशनादिकं कृत्वा शून्यतां विभाव्य पश्चाद् रक्तोत्पलं तस्योपरि सूर्य्यमण्डलं तस्योपरि रक्तताँकारं एतत् सर्व्वं परिणम्य कुरुकुल्लाभट्टारिकां रक्तवर्णां चतुर्भुजां दक्षिणभुजे शराभयहस्तां वामे धनुरुत्पलधरां वज्रपर्य्यङ्कस्थितां रक्तकञ्चुकोत्तरीयां आत्मानं भावयेत्। अधसि कामदेवं सपत्नीकं चिन्तयेत्। पश्चात् मन्त्रं जपेत् भावनान्वितः—

ॐ कुरुकुल्ले [ह्रीः] स्वाहा ।

॥ कुरुकुल्लासाधनम् ॥

---

## 178.

[2]हृच्चन्द्रमण्डले ह्रीःकारजं[3] ह्रीःकाराक्रान्तमध्यं[4] रक्तोत्पलं ध्यात्वा तत्परिणतामार्य्यकुरुकुल्लां रक्तवर्णां रक्तपद्मचन्द्रासनां रक्तप्रभामण्डलां रक्तविचित्रवसनोत्तरीयां अमिताभमुकुटां चतुर्भुजां मूलभुजाभ्यां आकर्णाकृष्टरक्तोत्पलकलिकाशरविराजितकुसुम[5]बाणचापधरां वामेन

---

[1] A omits सकल० ।

[2] N सहृ० ।

[3] Ab ०जातं ।

[4] ANC मध्ये ।

[5] Ab omits ०बाण०, ACBa ०वाम० ।

स[1]कन्दविकचरक्तोत्पलधरां दक्षिणेन वरदां महा[2]शृङ्गार-रसोज्ज्वलां दृष्ट्वा ज्ञानसत्त्वैनैकीकृत्य स्वशरीरारुणकिरणाङ्कुशाकृष्टान् देवासुरगरुडकिन्नरमहोरगयक्षनरनारीशत-सहस्रादिगणान् प्रणतविग्रहानतिभक्तान् परवशान् दशसु दिक्षु पश्यन्[3] ॐ कुरुकुल्ले ह्रीः स्वाहा इति मन्त्रं जपेत्[4] लक्षमारभ्य यावत्पर्य्यन्तं भगवतीं साक्षात् [न] कुर्य्यात्।

अथ कश्चित् वशीकर्त्तुकामः कृतलक्षजापो यथोक्त[5]योगं विधाय भक्तिप्रणतः सुरासुरादिमध्यवर्त्तिस्वदेहरश्म्यङ्कुशा-कृष्टां साध्या[6]मग्रतः संस्थाप्य स्वहृदि षोडशदलरक्तोत्पलं [7]तद्धृदि च विचिन्त्य पूर्व्ववत् आर्य्यवज्रा[8]नङ्गोक्तक्रमेण भ्रमराङ्कुशभावनया तन्नामाक्षरं स्वहृदि मन्त्रेण गाढ-मा[9]क्रम्य। तथैव शरेण हृदि विद्ध्वा महारागमूर्च्छितां च कोदण्डेन पादयोरुत्पलपाशेन च गले बद्ध्वा समाकृष्य स्वपादयोर्निपात्य— पुरुषं चेदङ्कुशेन हृदि [10]विन्धेत्, स्त्रियं चेत् धर्म्मोदये— ॐ कुरुकुल्ले अमुकं अमुकीं वा आकर्षय ह्रीः स्वाहेति मन्त्रं जपेत्। आकृष्टे तु [11]साध्ये तमेव मन्त्रं वशमानयेति विदर्भ्य जपेत्। शतजापेन सामान्येन नर-नारी[12]गणो राजामात्यश्च वशो भवति, अयुतेन प्रजालोकः,

---

[1] Ab ०कन्ध।

[2] महा० omitted in ACBa.

[3] A संपश्येत्।

[4] ANC जपन्।

[5] Ab ०क्तं।

[6] ANCBa साध्य०।

[7] ANCAb तद्धृति।

[8] AC ०सनो०।

[9] A समा०।

[10] AC विवन्धयेत्, AbBa बन्धयेत्।

[11] Ba साध्य, Ab साध्यायां।

[12] ANCBa ०गणा।

लक्षेण राजा, सप्तलक्षेण सुरा[1]सुरकन्याश्च, कोट्या गरुडैरावतादयो दिव्यपशवः सामान्यपशव[2]श्च, सादर[3]निरन्तरदीर्घकालमनन्तजापेन त्रिभुवनमपि वशीकुर्य्यादिति ।

॥ [4]आर्य्यश्रीमतीकुरुकुल्लासाधनम् ॥

---

179.

प्रथमं तावत् भावनादौ पञ्चगन्धानुलिप्ते पृथिवीप्रदेशे हृष्टचेता व्रती समाहित उपविश्य मृदुविष्टरे ततः पश्चात् हृदि रेफपरिणतं सूर्य्यमण्डलं ज्वालामालाकरालिनं तस्य नाभौ रक्तह्रीःकारं विचिन्तयेत् । ततो ह्रीःकारान्निःसृत्य मरीचिजालैर्दशदिशावस्थित[5]सत्त्वधातूनवभास्य श्रीकुरुकुल्लारूपेणावस्थाप्य पुनरागत्य तस्मिन्नेव प्रविष्टां मरीचिज्वालां विभावयेत् । ततः पश्चादाकाशे पुरतो द्विरष्ट[6]वर्षाकारां ज्वलत्पिङ्गलोर्द्ध्वमूर्द्धजां पञ्चकपालशिरोधरां शवारूढां मुण्डमालालङ्कृतहारां अर्द्धपर्य्यङ्कनाट्यस्थां ईषद्दंष्ट्राकरालवदनां ललज्जिह्वां चक्रीकुण्डलकण्ठिकाकेयूरमेखलानूपुरकृतभूषणां व्याघ्रचर्म्मनिवसनां चलद्रक्तवर्त्तुलचापारो[7]पितत्रिनेत्रां अमिताभनाथमुकुटीं चतुर्भुजां आकर्णपूरितरक्तोत्पल[8]कलिकाशरपूरितरक्तकुसुमधनुर्द्धरां शेषद्विभुजाभ्यां रक्तपुष्पकृताङ्कुशरक्तोत्पलधारिणीं विचिन्तयेत् । तस्या एव पूजार्थं स्वहृत्सूर्य्य-

---

[1] AC ०सुराश्च ।
[2] A omits सामान्यपशव० ।
[3] A श्यामादर० ।
[4] Ab omit आर्य्यश्रीमती० ।
[5] Ba ०सत्य० ।
[6] AC पुरतोष्ट० Ba पुरतोरष्ट० ।
[7] ANCBa ०वामारो० ।
[8] A omits ०कलिका०...०रक्तोत्पल० ।

मण्डलस्थह्रीःकारोद्भवपञ्चोपचारपूजाभिः पुष्पधूपदीप-गन्धनैवेद्यादिभिः पूजयेत्। पूजयित्वा परमकारुणिको योगी भक्तिनम्रः काया[1]दिना [2]कायादिवन्दनया(ना) वन्दते। ततो यदकारि मया पापं कारितमनु[3]मोदितं च तद् भगवत्याः प्रत्यक्षे देशयति। तदनु संसारसागरपतित-सत्त्वधातूद्धरणरूपं बोधिचित्तं बिभर्त्ति। ततश्चतुर्ब्रह्मविहारं भावयेत्। तदनु शून्यताभावना। तत्र चित्तमात्रमधि-तिष्ठेदनेन मन्त्रेण,— ॐ शून्यताज्ञानवज्रस्वभावात्मको-ऽहम्। इति चित्ताधिष्ठानम्। तदनु आकाशदेशे रेफपरिणतं सूर्य्यमण्डलं ज्वालाकरालिनं विभावयेत्। तस्योपरि कृष्णहुँकारपरिणतं विश्ववज्रं प्राकारं पञ्जरबन्धनं च वज्रमयीं भूमिं विभावयेत् इति रक्षाचक्रम्। ततो मध्ये एकाराकृतिं[4] दिव्यं धर्म्मोदयज्ञानं शुक्लवर्णं विभावयेत्। तन्मध्ये रक्तह्रीःकारोद्भवरक्ताष्टदल[5]पत्रकमलं तस्योपरि किञ्जल्के रेफपरिणतं [6]रविं तदुपरि शरं पुनरपि तस्योपरि पूर्णेन्दुधवलं द्वात्रिंशल्लक्षणात्मकं तदुपरि पुनरपि सूर्य्य-मण्डलं चतुरशीतिव्यञ्जनरूपं रक्तवर्णं तयोर्मध्ये रक्तह्रीःकारपरिणतरक्तोत्पलकलिकाशरैः[7] स्वचित्तप्रविष्टं विभावयेत्। पश्चात् चन्द्रसूर्य्यशरैरेकीभूतं द्रवमिवात्मानं पूर्व्ववत् कुरुकुल्लारूपं विभावयेत्। विभाव्य स्वहृदि[8] रेफेण

[1] AC भक्तिनमस्कारा०।

[2] ANCBa omit.

[3] ANCBa ०मभ्यनु०।

[4] ANC ०कृतं।

[5] Ba omits ०पत्र०।

[6] A omits रविं...रक्तह्रीःकारपरिणत० and repeats इति रक्षाचक्रं ...... तस्योपरि from above. Ba also repeats the same.

[7] NBa ०शरे।

[8] A हृदिस्थेन।

सूर्य्यमण्डलं तन्नाभौ ह्रीःकारं पुनरपि भावयेत्। तदुद्भव-रश्मिभिराकृष्यामिताभ[1]नाथमानीय गुह्येतरपूजाभिः सम्पूज्य चाभिषेकं[2]याचयेत्। तत्रेयं याचना, अभिषिञ्चतु[3]मामभितनाथ इति। [4]ततस्तेनामितनाथेन पञ्चामृत-पूर्णान् स्वहृदयात् स्फुरितान् पञ्चकलशान् विभावयेत्। ततस्तैः पञ्चामृतपरिपूर्णकलशैरभिस्नाप[5]यित्वा स्वहृदि कलशान् प्रवेशयेत्। तत्र प्रवेश्य योगी शिरसि अमिता-भनाथं भावयेदिति त्रिसन्ध्यं विभाव्य मन्त्रं जपेत्। ततः मन्त्रः ॐ कुरुकुल्ले ह्रीः स्वाहा। रक्तचन्दनेन विशेषतो जापः। ॐ आः हुँ इति मुखाधिष्ठानं कार्य्यम्।

अथ मन्त्री स्त्रीपुरुषौ वशीकर्त्तुकामः शुक्लप्रतिपद-मारभ्य त्रिसन्ध्यमयुतमेकं प्रतिदिनं भगवतीमूर्त्तिमवलम्ब्य रक्तवस्त्रं परिधाय प्रावृत्य गात्रं च तदनु स्वहृदि रविस्थ[6]स्वहृदवस्थितरक्तह्रीःकारपरिणतरक्त[7]मष्टदलकमलं योनिपर्य्यन्तगतनालं विभावयेत्। तद्दलेष्वष्ट भ्रमरान् अष्टान्तःस्वरपरिणताननतिहृष्टपुष्टकुङ्कुरक्ताननुक्रमपरि-पठि[8]तान् स्वनासिकापवनप्रेरितानुड्डीय[9] सव्येतरनासिका-विवरेण निःसृत्य साध्यस्य दक्षिणनासिकाविवरेण प्रविष्टान् सरभसमा[10]लूनविशीर्ण[11]तयाऽऽद्याष्टस्वरान्

---

[1] ANCBa ०मित०। [2] AC मोच०।
[3] AC ०मामिति० Ba मां नाथ०।
[4] B omits ततस्तेना० ......प्रवेशयेत्। [5] AN omit स्नापयित्वा।
[6] AC तदवस्थित, N स्वहृदवस्थितो, Ba स्व[हृ]द्रविस्थ।
[7] ANCBa omit ०रक्त०। [8] N ०परिचि०।
[9] Ba उद्दीरय। [10] B ०लय।
[11] ANCBa ०विस्तीर्ण०।

किञ्चिद्रक्तान् पञ्चयुतान् विचूष[1]येत् इति पश्येद् योगी। पश्चादाकर्णपूरितरक्तोत्पलकलिकाशरेण दृष्टमुष्टियुतो मन्त्री किञ्जल्कं [2]प्रतिवेधयेत्। ततस्ते भ्रमराः स्वसमयेन चोदिता वामनासिकाविवरेण निःसृत्य एकैकं स्वरं[3] गृहीत्वा योगिनो दक्षिण[4]नासाविवरेण प्रविष्टा इति स्वहृदि स्वपर[5]ज्ञानेनैकीभावं कुर्य्यात्। पश्चात् उत्पलेन गले बद्धा योनिमङ्कुशेन तु पीडितां शरजालैर्विचिन्त्य वशमानयेत्। अलातच[6]क्रारूढां साध्या[7]मानयेत् मन्त्ररूपेण साधकः—

सदानन्दो जपेन्मन्त्रं सोपदेशं सुनिर्णयः।

ॐ कुरुकुल्ले ह्रीः अमुकीं मे वशमानय स्वाहा। समस्तं चैतदहर्निशं कुर्य्यात्। ततः सा विह्वलीभूता सती[8] आगच्छति मन्त्रचोदिता।

मुक्तकेशी विवस्त्रा वा चानङ्गविवशातुरा।
तां प्राप्य स्वेष्टयोगेन पूजयेद् बुद्धमण्डलम्॥

विपुला सिद्धिर्न केनापि विहन्यते।

॥ इति उड्डि[9]यानविनिर्गतकुरुकुल्लासाधनम्[10] ॥

---

[1] AC विभाव०, Ba विभूष०। [2] Ba प्रविवेशयेत्।
[3] A स्वं। [4] B ०नासिका०।
[5] Ba ०ज्ञानमेकी०। [6] ACBa कुरुटां।
[7] AB साध्य०। [8] B omits.
[9] Ba ओडि०। [10] B adds ॐ सिद्धिः after Colophon.

## 180.

कुरुकुल्लां नमस्कृत्य बालानां बुद्धिवृद्धये ।
गुरुपादप्रसादेन कथ्यते भावनाक्रमः ॥

प्रथमं मन्त्रिणा सर्व्वसत्त्वानात्मानं च सर्व्वदुःखेभ्यो विमोक्तुकामेन प्रभातसन्ध्यायामुत्थाय [1]मुखप्रक्षालनादिकं कृत्वा मनोऽनुकूले स्थाने सुखासने चोपविश्य सर्व्वचिन्ता-पराङ्मुखेन चितत्त्वमन्त्रेण स्थानात्मयोगरक्षां कृत्वा स्वहृदये शुभ्रशशाङ्कमण्डलं भावयेत् । तदुपरि निजबीजं स्फुरद्र-श्मिकं तै रश्मिभिर्धर्म्मधातौ भगवतीमाकृष्य पुरतः संस्थाप्य नानाविधविचित्रसुगन्धिपूजाभिः सम्पूज्य वन्दनादिकं विधाय क्षमापयित्वा पुण्यं परिणाम्य प्रणिधानं विदधीत[2] । [3]पश्चात् ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमित्यनेन मन्त्रेण शून्यतां विभाव्य चितत्त्वेनाधिष्ठाय पुनरात्मान-माकाशे [4]चित्रलिखितमिव प्रभास्वररूपं चिन्तयेत् । तद-नन्तरं [5]स्वहृदये शुभ्रचन्द्रमण्डलं तदुपरि ह्रीःकारबीज-जनितेन्दीवरं तदुपरि अमृताङ्कमण्डलमूर्द्ध्वस्थितबीजा-धिष्ठितं स्फुरणसंहरणं कृत्वा चितत्त्वमन्त्रेणात्मानं भगवती-मक्षसूत्रोत्पलामृतकुण्डीं सव्यावसव्यपाणिभ्यां दधानां त्रिनेत्रां पद्मध्वक्प्रमुखैः सर्व्वतथागतैः वीणादिषोडशदेवी-भिरभिषिक्तां अमिताभविराजितनानापुष्पोपशोभितजटा-मुकुटां शृङ्गारादिरसोपेतां किञ्चित्सव्यपाणिपल्लवस्थाक्ष-सूत्रमालोकमानां क्षीराम्भोधिश्वेतवर्णाब्जस्थाममृताङ्को-

[1] A प्रमुख० ।
[2] ACBa ०धेत् ।
[3] Ba omits.
[4] Ba चित्त० ।
[5] ABa omit.

परि सत्त्वपर्य्यङ्कासनस्थां कङ्कणकेयूरकुण्डलनूपुरमुक्ताहारदिव्यवस्त्रादिविभूषितां नीलानन्तबद्धकेशीं पीयूषवर्णवासुकिकृतहारां [1]रक्ततक्षककृतकर्णाग्रकुण्डलां दूर्व्वाश्यामकर्कोटककृतयज्ञोपवीतां शुक्लपद्मनागेन्द्रकृत[2]हारां मृणालवर्णमहापद्मकृतनूपुरां पीतशङ्खपालकृतकङ्कणां धूमाभ्रवल्कु[3]लिककृतकेयूरां शुभ्र[4]वर्णां सवदमृतविग्रहां करुणार्द्र[5]चित्तां भावयेत्। तदनन्तरं स्वहृदये विधुमण्डलोपरि पूर्व्वबीजं स्फुरद्रश्मिकं विभाव्य तद्रश्मिभिः सर्व्वसत्त्वान् भगवतीरूपं निष्पाद्यानीय ॐ जः हुँ वँ होः इत्यनेन मन्त्रेण क्षीरोदकमिव एकलोलीकृत्य स्वशरीरे प्रवेश्य पूर्व्वार्च्चितभगवतीं च चितत्त्वेन शुक्लरक्तकृष्णेन सन्तोष्य दृढीकृत्य शिरःकण्ठहृदि मुद्रयेत्। तदनु हृद्बीजस्फारितरश्मिभिः सुखावतीसहादि[6]लोकधातुस्थान् अमितनाथप्रमुखान् सर्व्वतथागतान् वीणादिषोडशदेवीसमन्वितान् पञ्चतथागतात्मकपञ्चामृतकर्पूरकुङ्कुमकस्तूरिसुगन्ध[7]-परिपूरितगृहीतकलशान् आनीयाभिषेकं गृह्णीयात् गाथा[8]पाठपूर्व्वकम्। तत्रेयं गाथा—

[9]बोधिवज्रेण बुद्धानां यथा दत्तो महामहः।
ममापि त्राणनार्थाय खवज्राद्यं ददाहि मे ॥

---

[1] A omits रक्ततक्षक०...०कृतहारां। [2] N ०डोरां।
[3] ACBa ०माभ्रकु०। [4] A स्तूच०।
[5] ABa ०णादि०। [6] A ०महादि०।
[7] ANC गन्धि०।
[8] A पठेत् पूर्व्वकं, Ba पठेत्।
[9] Instead of this *Śloka* Ba reads बोधिवज्रेन बुद्धानामित्यादिना।

अभिषेकं [1]महावज्रं त्रैधातुकनमस्कृतम् ।
गृह्णामि सर्व्वबुद्धानां त्रिगुह्यालयसम्भवम् ॥
यथा हि जातमात्रेण स्नापिताः सर्व्वतथागताः ।
तथाहं स्नापयिष्यामि शुद्धं दिव्येन वारिणा ॥

अभिषिञ्चन्तु मामर्मितनाथप्रमुखाः सर्व्वतथागता वीणादिषोडशदेवीसमन्विताः । ॐ सर्व्वतथागताभिषेकसमयश्रिये[2] आः हुँ इत्यनेन तेऽप्यभिषिञ्च्य मुकुटे प्रविष्टा अमिताभश्च शिरसि स्थितो नायकत्वेन—अभिषेकग्रहणम् । तदनु स्वनाभौ कमलस्थेन्दौ[3] ऊर्द्धस्थितमग्निबीजारूढं सान्तमिन्दुबिन्दुनादचतुर्थस्वरयुतं अलिकालिस्फुरन्तं सुधामयं शुभ्रं दीपात् प्रदीपमिव देदीप्यमानं मुखद्वारेण निश्चार्य्य सर्व्वमणिमन्त्रौषधीनां प्रभावं झटिति गृहीत्वा नाभिद्वारेण नादे प्रवेशयेत् । पुनः पुनर्योगी [4]स्वरूपस्मृतियुक्तः कुमारीकर्त्तितसूत्रेण नवगुणं कृत्वा एकपञ्चाशत्स्फटिकगुलिकयाऽक्षसूत्रं विधाय पच[5]ञ्जीवेन(?) वा मध्यमाङ्गुष्ठाभ्यां गृहीत्वा शान्तिके एकाधिकशतकेन क्रोधाङ्गुष्ठाभ्यां त्रिसन्ध्यं चतुःसन्ध्यं वा चिरं विभाव्य ज्ञानाकर्षणयोगतः तमेव मन्त्राक्षरं जपेत् । दृढचित्तेन निमग्नमानसः पूर्व्वसेवाकृतलक्षः प्रतिदिनायुतजापेन सार्द्धमासद्वयेन कविर्भवति, विषनाशं[6] कुरुते । मन्दपुण्योऽपि त्रिसप्तलक्षजापेन त्रिसप्ताभिमन्त्रितां कठिनीं हस्तं वा त्रिसप्ताभिमन्त्रितं यस्य हस्ते मस्तके [वा] दीयते स मूर्खोऽपि

---

[1] ANC त्रिधा भिन्नं ।
[2] AC ०समश्रिये ।
[3] A स्थ इन्द्रौ ।
[4] A स्वर० ।
[5] ACBa प्रमु० ।
[6] AC ०रागं । ।

सन् कविर्भवति। पर्षदनभिभवनीयो वादी च भवति मञ्जुश्रीसमप्रभः। अश्रुतान्यपि सर्व्वशास्त्राणि चिन्तयति। इदं वा मन्त्रं गुरूपदेशतो जप्तव्यं प्रज्ञावृद्धये— ॐ कुरुकुल्ले ह्रीः वद[1] वद[2] वाग्वादिनि स्वाहा। सप्ताक्षरमन्त्रो[3]ऽक्षरलक्ष-जापेन होमात्तविधानयुक्तत्रिमधुराक्तशुक्लपुष्पाशीति-सहस्रहोमेन नागकन्या[4]मपि आकर्षयति, अप्रार्थितदिव्य-मानुषीं च लभते। नाश्चर्य्यं सिद्धमेतत्। अचिन्त्यो भगवान् बुद्धः, बुद्धधर्म्मा अप्यचिन्त्याः[5], अचिन्त्या बुद्धसिद्धयः, अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभाव इति। पूर्व्ववत् कुमारीकर्त्तितसूत्रेण कृतपोषधतन्त्रवायेण(य): चित्रकरेण च पट्टं विधाय त्रिष्कालमग्रीकृत्य सुगन्धिपुष्पैरभ्यर्च्य साहङ्कारो मन्त्रो जप्तव्यो मैत्रचित्तेन। स्त्यानसिद्धौद्धत्य-विचिकित्सालयसंशययुक्तस्यान्यचित्तस्य मन्दस्य वृथैवेत्याह सर्व्वविदितवचनात्। एते स्त्यानादयश्चित्तस्याशु निग्रहाय यत्नतः परिवर्ज्जनीयाः। दशाक्षरतारामन्त्रश्च जप्तव्योऽनेन कुरुकुल्लायोगेन सर्व्वविघ्नोप[6]शान्तये सत्त्वानां वशाय ताराकुरुकुल्लयोरभेदात्।

प्रज्ञाविधिः।

गृहाभिधानपत्राणि शटीं यष्टिमधु तथा।
ब्राह्मीं [च] मागधीं चैव सक्षौद्रां [7]भक्षयेत् कृती॥

अस्यायमुपदेशः— सप्ताक्षरमन्त्रेण सप्तवारानभिमन्त्र्य भैषज्यममृतमयं निष्पाद्य आत्मानं भगवतीरूपमालम्ब्य

---

[1] A ववद।
[2] ABa वाखा०।
[3] Ba मन्त्रा०।
[4] A नागाङ्गाना N नागाङ्गना।
[5] AC ०चिन्तिया, Ba ०चिन्तया।
[6] AC ०विघ्नप्र०।
[7] A भयकृतिः।

पटादिगतां भगवतीमवतार्य्याभ्यर्च्य कल्ये भक्षयेत्। शयनकाले च [1]पोट्टलिकां कृत्वा मुखे प्रक्षिप्य सुप्यात्। एतेन महाप्राज्ञो भवति। ॐ कुरुकुल्ले स्वाहेति—

प्रज्ञातन्त्रविधिः।

घृतं तगरमूलं च चक्राङ्कितं तथैव च।
दंष्ट्राघातप्रलेपेन [2]पानेन च हरेद् विषम्॥

विषतन्त्रम्।

पूर्व्वोदितचिह्नबीजरक्तवर्णपरिणतां भगवतीं करुणार्द्र-चित्तपर्य्यन्तां विभाव्य स्वहृदि रक्तचन्द्रोपरि [3]षट्कोणचक्रस्थं ॐ कुरुकुल्ले स्वाहेति सप्तबीजस्फुरद्र[4]श्मिभिर्भगवतीं ज्ञानसत्त्वरूपामानीय [5]सुखद्वारेण पूर्व्वोक्तमन्त्रेण पूर्व्ववत् प्रवेश्य एकलोलीकृत्य सर्व्वं चितत्त्वादिकं कृत्वा हृद्बीजरश्मिभिराकृष्टां साध्यामक्षसूत्रपाशेन बद्ध्वाऽऽनीय पादतले निपात्य मुक्तकेशां विह्वलां[6] मृतामिव दृष्ट्वा तेनैवाक्षसूत्रपाशेन[7] कृताङ्कुशेन[8] महासुखद्वारेण अवधूतीरन्ध्रेण साध्यस्य [9]भगद्वारेण विज्ञानमाकृष्य रक्तचन्दनेन [10]प्रवालेन वा षड्विंशतिगुणाक्षसूत्रेणानामिकाङ्गुष्ठगृहीतेन संरक्तचित्तेन सप्ताक्षरमन्त्रं जपेत्। पूर्व्ववत् रक्तह्रीःकारं पुनः कमलकिञ्जल्क[11]कर्णिके द्रष्टव्यम्।

वश्यविधिः।

---

1 AC पोङ्गु०।
2 A omits.
3 AC सङ्काप्प्र०।
4 ACBa ०स्फुरणार०।
5 Ba मुख०।
6 AC add विह्वलं गलां।
7 AC सूत्रेण।
8 AC add अक्षसूत्रपाशेन।
9 AC गुड०।
10 A वा प्रवा०, N वा नवा०
11 Ba ०ल्के।

पुनरपि प्रमदां वशीकर्त्तुकामेनाशोकाष्टम्यां[1] अशोकवृक्षतले गत्वा रक्ताम्बरं परिधाय एकाग्रचित्तेन अतीवोत्कण्ठिताशयो भूत्वा कुरुकुल्लायोगं विधाय मदनफलं[2] भक्षयित्वा कार्माचिका(?)रसेन [3]तिलकं [परिधाय] [4]वश्यानुरक्तचित्तेन मन्त्रं जप्तव्यम्। तत्रायं मन्त्रः—ॐ [5]ह्रीः अमुकीं[6] मे [7]वशमानय स्वाहा। सप्ताक्षरमन्त्रेण वा स्वाहान्तेन वा नाम[8] प्रविदर्भ्य मन्त्रं जपेत्। देवतान् वशं करोति किं पुनः क्षुद्रमानवान्। महाकालोऽपि वशीकृतो हारीत्या महायक्षिण्या अनेन कुरुकुल्लामन्त्रेणेति—

वश्यविधिः।

जारी चण्डालिका चैव स्नेहमल्ली[9] स्वशुक्रकम्।
मृताश्वोदरकीटाश्च वश्यं कुर्व्वन्ति भक्षणे॥
मृतस्य नेत्रं हृदयं च लोलं
[10]ललाटमांसं च तथैव नासिकाम्[11]।
संगृह्य पिष्ट्वा च विपच्य तैले
पुष्ये[12] च ऋक्षे वशकं जनस्य॥

वश्यतन्त्रविधिः।

ॐ कुरुकुल्ले सर्व्वदुष्टान् नाशय नाशय कीलय कीलय भञ्जय भञ्जय मर्द्दय मर्द्दय ध्वंसय ध्वंसय अपसारय अपसारय अभिमतं मे कुरु शान्तिं मे कुरु पुष्टिं मे कुरु सर्व्व-

---

1 Ba ०मेनमष्ट०।
2 Ba ०कलहं।
3 ACBa किरकं।
4 ANC वन्द्या०।
5 ANC क्रीँ।
6 N ०की।
7 N वशीभवतु।
8 AN omit.
9 AC ० मल्ले।
10 N मांसं only.
11 A ०नासञ्च।
12 AC पुष्पे।

सत्त्वान् वश्यान् मे कुरु स्वाहा ॐ ह्रीँ श्रौँ[1] हुँ[2] हँ[3] हाँ[4] हाः[5] अनेन मन्त्रेण वाय्वग्निमण्डलोपरि [6]मण्डलस्थपद्म-भाजने भक्तादिकममृतमयं पारदसदृशं दृष्ट्वा त्र्यक्ष[7]रेणाधि-ष्ठाय भगवत्यै सर्व्वभूतेभ्यो दीयते। ॐ मुरित्यनेन सर्व्व-पूजादिकं विसर्ज्जयेत्। एतेन महाविघ्नशान्तिर्भवति।

बलिविधिः।

[8]अथ होमकुण्डविधिं वक्ष्ये—

शान्तिके शान्तचित्तेन पुष्टिके पुष्टिचेतसा।
वश्ये चोत्कण्ठचित्तेन उद्विग्नेन तु मारणे॥
शान्तिकं मण्डला[9]कारं वाय्वाकारं तु पौष्टिके।
वश्ये चार्द्धचन्द्राख्यं खधातुरिव मारणे॥
हस्ता[10]यामं भवेच्छान्तौ द्विहस्तौ पौष्टिके ततः।
यथा वश्ये तथाऽऽकृष्टौ मारणे विंशत्यङ्गुलम्॥
हस्तार्द्धं च भवेच्छान्तौ हस्तमात्रं तु पौष्टिके।
द्विपञ्च मारणेऽङ्गुष्ठं यथाऽऽकृष्टौ [11]तु वश्यके॥
प्रति[12]पत्सु शान्तिकं होमं पौर्णमास्यां तु पौष्टिकम्।
अभिचारं चतुर्द्दश्यां अष्टम्यां वश्यकर्म्मणि॥

इति। अपरे—

ततस्तु [वि]लिखेत् मन्त्रं होमकुण्ड[13]प्रमाणतः।
शान्तिकं वर्त्तुलं कार्य्यं हस्तमात्रं तु सूचयेत्॥

---

[1] N क्रौँ। [2] A omits. [3] NC हूँ।
[4] N हाः। [5] A होः। [6] N त्रिमण्डल०।
[7] ANCBa ०द्यत्त०। [8] अथ...वक्ष्ये only in Ba.
[9] Ba मण्डा०। [10] ACBa ०यामं।
[11] AC तथा वश्यं, NBa तथा वश्ये।
[12] AC ०पत्त०, Ba ०पत्ते। [13] AC ०कुण्डल०।

[1]अर्द्धहस्तं खनेद् भूमौ श्वेतरङ्गं तु दापयेत् ।
पार्श्वयोस्तु समालिख्य चक्राकारं समन्ततः ॥
पौष्टिकं तु द्विहस्तकं[2] एकहस्तं ततः खनेत् ।
चतुरस्रं समं तेन[3] लेख्यं च पीतगैरिकैः ॥
अभिचारकं त्रिकोणं तु विंशत्यङ्गुलविस्तरम् ।
खनित्वा विंश[4]त्यर्द्धं च ज्वालामालाकुलं लिखेत् ।
अर्द्धचन्द्रं समालेख्यं वश्याकर्ष[5]णयोस्तथा ।
होमकुण्डं समुद्दिष्टं दिशो भागं विनिर्द्दिशेत् ॥
उत्तराभिमुखो भूत्वा मन्त्री शान्तिकमारभेत् ।
पौष्टिकं तु सदा [6]पूर्व्वं अभिचारं तु दक्षिणे ॥
पश्चिमे[7] तु सदा प्रोक्तं आकर्षोच्चाटनादिकम् ।
अभिचारं सदा कृष्णं पञ्चरङ्गेन वश्ययोः ॥
तिलतण्डुलक्षीरेण घृतेन मधुना सह ।
पञ्चामृतेन(त) युक्तेन शान्तिकं पौष्टिकं मतम् ॥
समिधानि च सर्व्वाणि क्षीरवृक्षसुगन्धयोः ।
भक्ष्यं नानाविधं दद्यात् बलिं[8] वा सार्व्वभौतिकम् ॥
शान्तिकं शरत्काले तु हेमन्ते पौष्टिकं तथा ।
ग्रीष्मेऽभिचारकर्म्माणि कुर्य्यात् सर्व्वाणि साधकः ॥
प्रदोषे शान्तिकं प्रोक्तं प्रत्यूषे पौष्टिकं तथा ।
मध्याह्ने अर्द्धरात्रे वा प्रकुर्य्यादभिचारकम् ॥
न हि[9] होमकर्म्मणः सङ्ख्यां ये चैव वदन्ति च ।
ते आचार्य्या महाशान्ता बुद्धशासनसम्मताः ॥

---

1 AC ऊर्द्ध० ।
2 AC ०हस्ते, Ba ०हस्ते ।
3 ANC समन्ते च ।
4 Ba ०प्रात्य० ।
5 Ba ०णास्त० ।
6 AC पूर्वो ।
7 ANC ०मेन ।
8 ACBa द्बलिं ।
9 Ba नाहं ।

रागचेतसस्त्वन्ये [च] द्वे[1]षिणः परदूषकाः ।
गर्व्विता मोहयुक्तास्ते वर्ज्जिता बुद्धशासने ॥
इति होमकुण्डविधिः ।

[2]अन्यश्च कालदष्टो यस्तु कामेन[3] गुरूपदेशतः कालं ज्ञात्वा आत्मानं शेष[4]नागरूपं ध्यात्वा सितवर्णं स्वहृ[5]दष्ट-दलकमलोपरि प्रज्ञामण्डलस्थप्रज्ञाबीजं महासुखामृतं पिबन्तं चक्षुर्भ्यां निश्चार्य्य साध्यं शिरश्चक्षुर्मुखहस्तगुह्य-पादपर्य्यन्तं स्रवन्तं एकाग्रदृढचित्तेन ध्यातव्यम्। नोचे[6]द् वा पोषधयुक्तां अनामिकां पूर्व्वोक्तमण्डलबीजस्थां सुसा[7]ध्वी-कृत्य बीजयुक्तेन घण्टाधः स्पृशेत्। लगुडं दत्त्वा तर्ज्जनिकया वा जीवस्थया वस्त्रेणाच्छाद्य नोचेदनाहतेन पूर्व्वोक्तस्थानेषु स्पृशेत्। पूर्व्वपोषधं दातव्यं नोचेत् शशिमण्डलस्थं स्रवन्तं ध्यातव्यम्। सुरघोषटङ्कन[8]मधुना पानं दातव्यम्। अङ्ग-न्यासं हस्तेन सदा कर्त्तव्यम्। चितत्त्वेन दष्टं मोक्षितव्यं एतेनोत्तिष्ठेन्न सन्देहः। पुनः फणीन्द्रेण गले बद्ध्वा दष्टं चञ्चु[9]पीडितं खं नीयमानं खगेन्द्रेण खं प्रविष्टं निर्विषं भवेत्। अपक्षरत् सतारकाचन्द्राद्धो ध्यातं जलाविल-कपालिकमिव नृत्य(न्तौ)न्निर्व्विषं भवति नान्यथा। दृष्टं गोविन्दमिव दष्टं सुप्तमनन्तभोगोपरि क्षीराम्भोधिपयः-स्नातं निर्विषं भवति नान्यथा।

---

1 A सिद्धे॰ ।
2 Ba omits the concluding portion from here.
3 AC कायेन ।
4 A ॰राग॰ ।
5 N ॰द्यायोपध॰ ।
6 AC ॰दये अ॰ ।
7 A ॰ध्वाह्यत्य, N ॰ध्वाक्षत्य ।
8 AN सुवघोषटङ्कन॰ ।
9 A वङ्कु॰ ।

अस्तातीतं[1] च शान्तं क्षोभनं कुरुते परम् ।
शुक्लं विषहरं ज्ञेयं पीतं स्तम्भकरं पुनः ॥
[संक्रामणं च रक्तेन] कृष्णेन चालनं मतम् ।
चतुर्भुजं[2] यथायोगं चतुर्बीजसमन्वितम् ।
स्तम्भनोच्चाटनं न्यासं क्षोभनं कुरुते ध्रुवम् ॥

परस्तम्भमेरुः प्रयोक्तव्यः किन्तु क्षोभनं चालनं कर्त्तव्यमानान्वितं प्रणिधानं यो रुणद्धि स्वहस्ताभ्यां मुखाक्षिकर्णनासिकां स गुरूपदेशतो हंसोच्चारणेन विषं हन्ति । मुष्ट्या विषमाकृष्य संक्रामयेन्न सन्देहः । स्वविरेचकयोगतस्तत्त्वं व्योषभक्षणा[3]द् विषं नश्यति । समुद्रजसौवीरं पानयोगाच्च विषं हन्ति । चक्राङ्कितं श्वेतफणिनं पुनर्नरै[4]र्निःशङ्कं ध्रिय[5]ते (फणी)—

गुहो सिहो[6] चन्द्रो सुजो एक येसां[7] सापुड ।
[8]रुठेल्ल काल[9] कि करइ सो बापुड ॥[10]

॥ शुक्लकुरुकुल्लासाधनं समाप्तम् ॥

---

[1] A तीरं ।
[2] N भूतं ।
[3] AC ०माणा ।
[4] A पुनर्व्वै ।
[5] AC प्रिय० ।
[6] N मिहो ।
[7] C एकज्यांसां ।
[8] AC पुठेल्ल ।
[9] C कालि ।
[10] छाया—
गुहः सिंहश्चन्द्रः सूर्य एको येषां सर्पः (? सम्प्राप्तः) ।
रुष्टः कालः किं करोति स वराकः ॥

## 181.

नमः कुरुकुल्लायै ।

अलिलुलितविकाशाम्भोजसङ्काशनेत्रा-
मभिनववनलक्ष्मीहारिसर्व्वाङ्गशोभाम् ।
स्फुटवलयचापस्फूर्ज्जदिष्टाङ्कुशाङ्कां
प्रणमत कुरुकुल्लां कामसर्पापहन्त्रीम् ॥

प्रथमं तावत् भावनादौ पञ्चगन्धोपलिप्ते विजने पृथिवीप्रदेशे हृष्टचेता व्रती मृदुविष्टरे चोप[1]विश्य ततः पश्चात् हृदि रक्तरेफेण सूर्य्यमण्डलं ज्वालामालाकरालिनं ततः स्वहृद्याद्यस्वरेण चन्द्रमण्डलं ततः सपरं बीजमधो वह्निविभूषितं चतुर्थस्वरभेदितं ततो बीजान्निःसृत्य मरीचिजालैर्दशदिक्स्थितान् सर्व्वलोकधातूनवभास्य श्रीकुरुकुल्लारूपेणावस्थाप्य पुनरागत्य तस्मिन्नेव बीजे प्रविष्टान् मरीचिजालान् विभावयेत् । ततः पश्चादाकाशदेशे पुरतः द्विरष्टवर्षाकारां ज्वलितपिङ्गोर्द्ध्वमूर्द्धजां पञ्चकपालशिरोधरां तार्क्ष्यासनां वज्रपर्य्यङ्कनिषण्णां शुक्लप्रभामण्डलान्वितां षड्भुजां सव्यावसव्यप्रथमकराभ्यां त्रैलोक्यविजयमुद्राधरां द्वितीयवामदक्षिणकराभ्यामभयसित[2]कुन्दकलिकाधरां परिशिष्टभुजद्वयेनाक्षसूत्रकमण्डलुधरां [3]सश्रृङ्गाररसं बिभ्रतीं कनकवलयपूरितबाहुलतिकां नवयौवनगर्वितां सितवस्त्रपरिधानां शुक्लकञ्चुकोत्तरीयां सर्व्वाभरणभूषितां पञ्चतथागतमुकुटां हृदि सितोत्पलवरटके चन्द्रमण्डले तद्बीजं विन्यस्य विभाव्य च एवमहङ्कारं[4] कुर्य्यात् अहमेव

[1] AC ०विस्तरोप० ।
[2] AC ०कुण्ड० ।
[3] AC शृङ्गा० ।
[4] A मद्दाकारं ।

कुरुकुल्ला भट्टारिकेति। ततः स्वहृदि आदिस्वरसम्भूतचन्द्रमण्डलस्थमष्टमं बीजं तस्योद्भवपञ्चोपचारपूजान्वितो नानाविधदेवीः पूजाभ्रजालविसरैः पूजयेदिति पूजा, पूजयित्वा परमकारुणिको योगी भक्तिनम्रः कायवाक्चित्तेन वन्दयेदिति वन्दना, वन्दयित्वा च पापदेशना-[1]पुण्यानुमोदनादिकं कुरुते। यत् कृतं मया पापकं कर्म्म कारितमनुमोदितं तदद्य[2] भगवत्याः प्रत्यक्षतो देशितं सर्व्वमिति। तदनु बोधिचित्तं बिभर्त्ति। भवसागरे पतितान् सत्त्वान् तेषामुद्धरणं कर्त्तुं चित्तवज्रं श्रेष्ठं करोम्यहं इति बोधिचित्तोत्पादः। ततः पश्चात् चतुर्ब्रह्मविहारान् तान्[3] भावयेत्। तदनु सर्व्वभावान् विचार्य्य प्राकृतकायपरित्यागाय स्वभावशुद्धमन्त्रमामुखीकुर्व्वन् शून्यतां त्रैलोक्यात्मिकां विभाव्य मन्त्रेणानेन स्वचित्तमधितिष्ठेत्— ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। पश्चात् पूर्व्वाहितप्रणिधानबलात् सत्त्वार्थमभिवीक्षमाणो मन्त्री दिव्यकायमुत्पादयेत्। मन्त्रन्यासक्रमेण दिव्यकायसूचना। तदन्वाकाशदेशे[4]ऽष्टमं बीजं तेन निष्पन्नं पुण्डरीकं विकसितं तस्योपर्य्यष्टमं[5] बीजमर्द्धेन्दुबिन्दुभूषितमधः षष्ठस्वरभेदितं तत्परिणतं विश्ववज्रं तेन वज्रमयीं [6]भूमिं वज्रवितानं वज्रप्राकारं च चिन्तयेत्। ततो मध्ये एकाराकृति दिव्यं धर्म्मोदयज्ञानं शुक्लं विभावयेत्। तन्मध्ये शुक्लमष्टमं बीजम[7]धो वह्निविभूषितं मूर्द्धनि चतुर्थस्वरभेदितं सविसर्गं

---

[1] AC omit ०पुण्यानुमोदना०।

[2] A तदग्रग, C तदग्रे।

[3] AC omit.

[4] N ०त्तमं, C ०ष्वष्टमं।

[5] N ०पर्य्यन्त०।

[6] AC omit.

[7] AN ०मध्ये।

तस्योद्भवशुक्लाष्टदलकमलं तस्योपरि किञ्जल्के सप्तमं बीजं तस्योद्भवं सूर्य्यं तस्योपर्य्याद्यस्वरसम्भूतं चन्द्रसूर्य्यं अशीत्यनुव्यञ्जनैर्व्यञ्जितं चन्द्रमा[1]दर्शात्मकं द्वात्रिंशल्लक्षणविभूषितं अनयोर्म्मध्ये शुक्लतद्बीजपरिणतशुक्लोत्पलकलिकायां स्वचित्तं प्रविष्टं चिन्तयेत्। पश्चात् चन्द्रासनरवीन्दुचित्तैरेकीभूतं द्रवमिवात्मानं विभाव्य ततः पूर्व्वमुक्तकुरुकुल्ला[2]रूपमात्मानं विभावयेत्। ततो विभाव्य स्वहृदि रेफेण सूर्य्यं विभाव्य तन्नाभौ बीजं पुनरपि भावयेत्। तदुद्भवरश्मिभिराकृष्यामिताभनाथमानीय गुह्येतराभिः पूजाभिः तं सम्पूज्य चाभिषेकं याचयेत्। तत्रैषा याचना, अभिषिञ्चन्तु माममिताभनाथ इति। ततस्तेनामिताभनाथेन पञ्चामृतपूर्णान् स्वहृदयात् स्फारितान् कलशान् विभावयेत्। ततस्तैः पञ्चामृतपूर्णकलशैः संस्नापयेद् भगवन्तमिति। ततस्तान् कलशान् स्वहृदि प्रविष्टान् चिन्तयेत्। ततो विन्यस्य मूर्ध्नग्रमिताभनाथं चिन्तयेदिति। ततस्त्रिसन्ध्यं भावनां विभाव्य न्यासं कृत्वा मन्त्रं जपेत्। न्यासमन्त्रस्योद्धारः— षष्ठस्य तृतीयबीजमर्द्धेन्दुबिन्दुभूषितमधः पञ्चस्वरभेदितं स्तनादूर्द्ध्वं शिखरभागपर्य्यन्तं न्यसेत्, शुक्लमाद्यस्वरसम्भूतमर्द्धेन्दुविभूषितं न्यसेत् कण्ठे, रक्तं तृतीयस्य तृतीयं बीजमर्द्धेन्दुविभूषितं अधो वह्निविभूषितं चतुर्थस्वरभेदितं न्यसेत् नाभ्यधोबस्तिपर्य्यन्तं, पीतं प्रथमस्य द्वितीयं बीजमर्द्धेन्दुविभूषितं न्यसेत् पादद्वय[3]पर्य्यन्तं, हरितं पृथिव्यप्तेजोवायुराकाशश्च पञ्चमं क्षिँ जँ खँ गँ स्कँ सँ जः हुँ वँ हो: खँ रँ शिरसि च हृदये मूर्द्ध्नि नाभौ च कण्ठे कृत्वा

---

[1] C ०दर्शा। [2] A ०साधनमा०। [3] AC ०दहृद०।

न्यासं हरति विषं कालकूटादिसम्भवम् । अथातो मूल-मन्त्रस्योद्धारः—आदौ वर्णस्वरं दत्त्वा ततः पञ्चमस्य पञ्चमम्, सप्तमस्य पञ्चमं चान्ते[1] तद्विन्दुद्वयभूषितम्, ततः प्रथमस्य प्रथमं बीजं पञ्चमस्वरभेदितम्, [2]षष्ठस्य द्वितीयं बीजं पञ्चमस्वरभेदितम्, पुनः प्रथमस्य प्रथमं बीजं पञ्चम-स्वरभेदितम्, षष्ठस्य तृतीयं बीजं [पुनः षष्ठस्य तृतीयं बीजं] तत् प्रथ[मैकादशे]न विभूषितम्, सप्तमस्य चतुर्थं बीजं अधो वह्निविभूषितं मूर्द्धि चतुर्थस्वरभेदितं कृत्वा अन्ते सविसर्गकम्—

नमश्चान्ते पुनर्दत्वा वौषडन्तं[3] तु योजयेत् ।
स्वाहा चैव पुनश्चान्ते एवं सर्व्वत्र कारयेत् ॥
एतैः पञ्चदशभिर्बीजैर्म[4]न्त्रमक्षरसङ्ख्यया ।
जपेल्लक्षं होमयेद्दशांशकेन कुसुमादिकाः ॥
सव्ये प्राणप्रवेशेन सरविशशि[5]गतैर्बन्धनम्[6] ।
सव्ये वामे च कृत्वा प्राणबन्धं कुर्य्याद् जापं सदा मन्त्री ॥

स्फटिकमुक्ताफलेनाक्षसूत्रकेणाष्टोत्तरशतेन गुलिकाः सूत्रै[7]र्ग्रन्थयेत् । प्राणनिर्गमकाले न चालये[8]द् गुलिकाम्—

प्राणावेशे जपेन्मन्त्रं यदीच्छेत् सिद्धिमात्मनः ।

ॐ क्षः कुरुकुल्ले ह्रीः नमो वौषट् स्वाहा—देव्या हृदयमन्त्रः । ॐ श्वेते हुँ फट् शिरः, ॐ श्वेतजटिनि, स्वाहा शिखा, ॐ रत्नामिताभपद्म[सम्भ]वायेति कवचम् ॐ (चक्षु)समन्तचक्षुविशोधने स्वाहा नेत्रम्, ॐ भयनाशनि

[1] AC repeat. [2] AC repeat षष्ठस्य......०भेदितम् ।
[3] AC ०षडं । [4] AC ०न्त्राक्षर० । [5] A गतं ब० ।
[6] C ०न्दनं । [7] AC सूत्रं ग्र० । [8] A ०क्कु० ।

चासनि[1] चास चास[2] चासय चासय[3] सर्व्वनागयक्षभूतान् भ्रटि[4] तटि वैतडि[5] श्वेते श्वेतजटिनि हुँ हुँ फट् फट्[6] स्वाहा अस्त्रम्। मुक्ताफलाक्षसूत्रेण मन्त्रजापः। पञ्चामृतं भक्ष्यं शोधयित्वा मन्त्रितं ॐ आः हुँ इति त्र्यक्षरेण। त्रितत्त्वैस्तदधिष्ठानम्, अधिष्ठानात् मन्त्रसिद्धिरिति।

स्वहृदि आदिस्वरं ध्यात्वा कपालत्रयोपरि पद्मभाण्डं तन्मध्ये पञ्चबीजानि ततो बीजान्निःसृत्य पुल्लीरमलयं गत्वा पुनर्जालन्धरं यावत् ततो जालन्धरगतान् तथागतान् बोधयेत्। तान् सर्व्वानेकीभूतान् द्रुतं चन्द्रमण्डलरूपं पश्येदमृतम्, घण्टिकारन्ध्रमार्गेण[7] स्रवदमृतं स्कन्धधात्वायतनानि प्रीणयेत्। प्रीणयित्वा तत्पार्श्वे च तिष्ठति। तत्र घण्टिकोपरि हुँकारमध्ये मुखविलम्बितं[8] तत्रोपरि ॐकारं पश्येत्। ततः स्वहृत्पद्मभाण्डे ज्ञानामृतं स्वच्छम्, ततो यँकारपरिणतं वायुमण्डलं ध्वजाङ्कं धन्वाभं नीलम्, तत्रोपरि रेफेणाग्निमण्डलं त्रिकोणाकारं ज्वालाङ्कितम्, दीप्यमानांशुतेजसा तस्योपरि नाभ्यब्जं शुक्लमष्टपत्रसंयुक्तं सकर्णिकं सनालं मेढ्र[9]गतपर्य्यन्तं चिन्तयेत्। तन्मध्ये ह्रीःकारं ज्वालामालाकुलं सुदीप्तं तत्परिणतां कुरुकुल्लां भगवतीं ज्ञानामृतेन सन्तर्पयेत्। पञ्चतथागतैरधिष्ठितां तां विभावयेत्। एतज्ज्ञानामृतवर्षिणीं ध्यात्वा सर्व्ववारं विषाभिभूतानां योजयेत् मन्त्रवित् सदा।

---

[1] AC omit.
[2] AC त्रासें त्रासे।
[3] AC भ्रामय भ्रामय।
[4] AC भति।
[5] A वैरटि।
[6] one फट् is omitted in AC.
[7] AN ०कारमा०।
[8] C ०विड०।
[9] AC मेद्र०।

अथ मन्त्री विषमपहन्तुकामः शुक्लप्रतिपदमारभ्य त्रिसन्ध्या[1]यामयुतमेकैकमेवं प्रतिदिनं भगवतीमूर्त्तिमवलम्ब्य शुक्लवस्त्रं परिधाय प्रावृत्य च गात्रं तदनु स्वहृदि चन्द्रस्थशुक्लह्रीःकारपरिणतमष्टदलकमलं [2]योनिपर्य्यन्तगतनालं विभावयेत् । तद्दलेष्वष्ट भ्रमरान् अष्टस्वरपरिणतान् हृष्टतुष्ट[3]पुष्टकृष्णरक्तानन्क्रमपठि[4]तान् स्वनासिकापवने प्रेरितान् उड्डीय स्वनासिकासव्येतरेण निःसृत्य साध्यस्य विषातुरस्य दक्षिणनासिकाविवरेण प्रविष्टान् सरभसमालूनविशीर्णतया निर्व्विषीकृत्य अष्टाद्यस्वरान् किञ्चित् शुक्लान् पत्रयुतान् विचूष[5]येत् । इति विचिन्त्य विषातुरस्य दक्षिणनासापुटविवरेण निःसृता इति चिन्तयन् योगी पश्चादक्षमालाभिघातं कमण्डलुजलाभिषेचनं कृत्वा विषार्त्तमुत्थापयति ।

कालत्रयं विभावी स्यात् तार्क्ष्यचूडामणिः स्वयम् ।
अलातचक्ररूपेण मन्त्ररूपेण साधकः ।
सदानन्दो जपेद् योगी सोपदेशः सुनिर्णयम् ॥

अनन्तादिकुलिकान्तान् नागान् न्यसेत् सर्व्वेषु स्थानेषु—

अक्षराणां पुरा न्यासं स्वराणां च विशेषतः ।
तत्पश्चादनन्तकुलिकौ केशबन्धनस्थितौ ॥
हेमाभस्तक्षकः कर्णभूषाकृतोद्यमः शिरः[6] ।
मणिबन्धे महापद्मस्तप्तचामीकरप्रभः ॥

---

[1] A सन्ध्या० ।
[2] C omits.
[3] AC omit ०पुष्ट० ।
[4] C ०परिपठि० ।
[5] ACBa विभूष० ।
[6] ANC omit.

यज्ञोपवीतक्रियया स्थितः कर्क्कोटकः सितः ।
वासुकिर्मेखलायां तु रक्तपद्मामलद्युतिः ॥
कुन्दबन्धूकसङ्काशौ पद्मशङ्खौ च पादयोः ।
ईदृशैराभरणैरुग्रैर्भूषितो मन्त्रवित् सदा ॥

कुरुकुल्लारूपसंस्थितः गरुडोपरि समासीनः साधयेत् सचराचरं एवमनेनानुक्रमेण ।

साधको भावितात्मा स्यात् तार्क्ष्यचूडामणिः स्वयम् ।
तत्रस्थश्च जपेन्मन्त्री त्रिसन्ध्यं सुसमाहितः ॥

अनेनैव च मन्त्रेण दध्यन्नमर्कपत्र[1]कं कृत्वा भोजयन् मन्त्री हरेद् विषसागरान् । पूर्णकुम्भं दक्षिणावर्त्तशङ्खं वा एकविंशतिवारान् परिजप्य उदकं पाययेत्[2] विषातुरान् । शुक्लं ध्यानं ललाटे बिन्दुरूपं निर्व्विषीकरोति । पीतं ध्यानं स्तम्भनं करोति । रक्तं ध्यानं नागरूपं विषक्षोभं कुरुते । रक्तं ध्यानं विषसंक्रामणं कुरुते । हरितं ध्यानं प्रत्युज्जीवनं कुरुते । इति ध्यानविशेषः कथितः ।

॥ श्रीमन्मायाजालमहायोगतन्त्रात्[3] षोडशसाहस्रिकाद्राकृष्टकुरुकुल्लासाधनं समाप्तम् ।

। [4]कृतिरियमाचार्य्यश्रीकृष्णपादानाम् ॥

---

[1] A दध्यन्नपत्र० ।
[2] AC यापयेत् ।
[3] ANC ०तन्त्रान्त० ।
[4] The author's name is given only in N.

182.

संक्षेपेण तारोद्भवकुरुकुल्लारूपमात्मानं विचिन्त्य धर्म्मोदये साध्यं दृष्ट्वा स्वहृदयस्थज्ञानरश्मिना तमभिषिञ्च्य परिशुद्धं सम्पुटाञ्जलिकं वशीभूतमारक्तवर्णं ध्यायादिति वश्यविधिः ।

अथ भगवत्याः कुरुकुल्लायाः साधनं वक्ष्ये । प्रथमं तावन्मन्त्री सुखासनोपविष्टः पटादिगतां कुरुकुल्लां बुद्धबोधिसत्त्वांश्च पुरतोऽवलम्ब्य मनोमयीं पूजां विधाय प्रणिपत्य त्रिशरणगमनादिकं कुर्य्यादनेन—

रत्नत्रयं मे शरणं सर्व्वं प्रतिदिशाम्यघम् ।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः ॥
उत्पादयामि वरबोधिचित्तं
निमन्त्रयामि बहु सर्व्वसत्त्वान् ।
इष्टां चरिष्ये वरबोधिचर्य्यां
बुद्धो भवेयं जगतो हिताय ॥

[1]इत्यादिना बोधिचित्तं उत्पादयेत् ।

तदनन्तरं ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहं इति वारत्रयमुच्चार्य्य स्वभावशुद्धमधिमुच्य शून्यतां विभाव्य स्वहृद्याद्यस्वरसम्भवे चन्द्रमण्डले ताँकारं रश्मिमालिनं विचिन्त्य तदुद्भवरश्मिसमूहैर्द्दशदिग्लोककधातूनवभास्य सर्व्वसत्त्वान् वशीकृत्य तस्मिन् बीजे कुरु[2]कुल्लात्मदेहं प्रवेशेनात्मानं कुरुकुल्लारूपं पश्येत् रक्तवर्णां पद्मसूर्य्यासनवज्रपर्य्यङ्कनिषण्णां सुप्रभामण्डलां षड्भुजां सव्यावसव्यप्रथम-

---

[1] इत्यादिना...॰दयेत् is found only in Ba.   [2] N सकुरु॰ ।

भुजाभ्यां त्रैलोक्यविजयमुद्राधरां द्वितीयदक्षिणवामकराभ्यां अङ्कुशरक्तोत्पलधरां परिशिष्टकरद्वयेन आकर्णपूरितधनुःशरां सशृङ्गाररसविभ्रमां कनकवलयपूरितबाहुलतिकां नवयौव[1]नोद्धतां रक्तवस्त्रपरिधानां रक्तकञ्चुकोत्तरीयां सर्व्वाभरणभूषितां पञ्चतथागतमुकुटाम्। हृदि रक्तोत्पलवरटके चन्द्रमण्डले बन्धूकजवाकुसुमसन्निभं ताँकारं विन्यस्य एवं विभाव्याहङ्कारं कुर्य्यात् अहमेव कुरुकुल्लाभट्टारिकेति। ततो नानाविधदेवताभिः पूजाभ्र[2]जालविसरादिभिः पूजितं संस्तुतं दृष्ट्वा वायुमण्डलारूढं हृदि अङ्कुशेन विद्ध्वा साधनीयस्य हृदये उपविश्य [3]साटोपमुच्चारयेत्। रक्तोत्पलकलिकानिभेन शरेण साध्यं पुनः पुनर्व्विबन्धयेत्। तत्रायं मन्त्रः— ॐ कुरुकुल्ले ह्रीः अमुकं[4] वशमानय ह्रीः स्वाहा। ततः साध्यं विह्वलीभूतं पादयोर्निपतितं दृष्ट्वा प्रेषयेत्। एवं त्रिसन्ध्यं भावयतो नित्यं शक्रमपि वशमानयति। पूर्व्वसेवाऽस्य अभिनवपटे केशाद्यपगते पौषधिकेन चित्रकरेण प्रच्छन्ने प्रदेशे पटो लेखयितव्यः। एवं निष्पन्ने पटे प्रतिष्ठिते शुभे [5]अहनि तस्याग्रतः सितचन्दनेन मण्डलकमुपलिप्य[6] घृतप्रदीपं प्रज्वाल्य पञ्चोपचारैर्भगवतीं च सम्पूज्य अयुतं जपेत्। तत्रायं मन्त्रः— ॐ कुरुकुल्ले ह्रीः स्वाहा। ततः सर्व्वकर्म्मसमर्थो भवति।

॥ षड्भुजकुरुकुल्लाभट्टारिकायाः साधनं समाप्तम् ॥

---

[1] ANBa ०नवतां।
[2] ACBa ०जाले।
[3] A सानप०।
[4] A ०को।
[5] A हरि।
[6] AC ०लिख्य।

183.

हेवज्रतन्त्रसम्बन्धां त्रैलोक्यवशकारिणीम्।
कुरुकुल्लामहं नत्वा वक्ष्ये तत्साधनं स्फुटम्॥

इह तन्त्रे भावनाधिकृतो मन्त्री प्रातः शयनादुत्थाय हृदये रँकारपरिणतसूर्य्यमण्डले रक्तह्रीःकारं दृष्ट्वा तत्किरणैर्वक्ष्यमाणकुरुकुल्लाभगवतीं अग्रतो दृष्ट्वा पञ्चोपचार[1]मेघैः सम्पूज्य तस्याः पुरतो रत्नत्रयं मे शरणमित्यादिगाथां त्रिः पठेत्। ततस्त्रिदुःखदुःखितान् सत्त्वान् मनसाऽवलम्ब्य तद्दुःखोद्धरणलक्षणां महाकरुणां[2] भावयेत्। ततो धर्म्मपुद्गलयोर्ग्राह्यग्राहकस्वभावयोरभावस्वभावामद्वय[3]विज्ञप्तिलक्षणां शून्यतां विभाव्य तन्मन्त्रेणाधितिष्ठेत्— ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति। ततस्तद्देवाद्वयचित्तमाकाशे सूर्य्यमण्डलं दृष्ट्वा तन्मध्ये रक्तह्रीःकारपरिणतरक्तोत्पलकर्णिकासूर्य्ये तदेव बीजं ततः स्फुरणसंहरणं कृत्वा तत्रैव प्रवेश्य तत्सर्व्वं परिणम्य[4] श्रीकुरुकुल्लारूपमात्मानं पश्येत्, रक्ताष्टदलकमलमध्ये शवहृत्सूर्य्योपरि अर्द्धपर्य्यङ्के ताण्डवेन स्थितां सूर्य्यप्रभामण्डलां दिग्विदिक्षु अष्टश्मशानपरिवृतां रक्तवर्णां द्विरष्टाब्दां ऊर्द्धपिङ्गलकेशीं शिरसि पञ्चबुद्धमयीं पञ्चकपालधारिणीं सद्योमुण्डमालालङ्कृतहारां दंष्ट्राकरालवदनां ललज्जिह्वां रक्तवर्त्तुलवामारोपितत्रिनेत्रां क्रोधशृङ्गाररसां अस्थिमयचक्रीकुण्डलकण्ठिकारुचकमेखलाकेयूरनूपुरकृतभूषणां मूलभुजाभ्यां आकर्णपूरितरक्तो-

---

[1] AC ०द्वार०। [2] AC ०कारुणीं।
[3] A ०विज्ञाप्ति०। [4] AC ०र्व्वोपरि।

त्पलकलिकाशरयुक्तरक्तकुसुमचापधरां शेषभुजाभ्यां रक्तोत्पलपाशाङ्कुशधारिणीं चिन्तयेत्। तच्छिरःकण्ठहृदयेषु ॐ आः हुँकारान् पश्येत्। ततः स्वहृत्सूर्य्यस्थरक्तोत्पलकर्णिकास्थर्य्यं रक्तह्रीःकारं दृष्ट्वा तद्रश्मिभिः सर्व्वतथागतान् सञ्चोद्यानीय प्रार्थ्य पञ्चामृतपूर्णकलशैः अभिषिच्यते। अभिषिच्यमानाया मुकुटे भगवानमिताभ उत्पद्यते। ततः स्वहृद्बीजादष्टौ देवीर्निश्चार्य्य स्वस्वबोधिचित्तादिद्रव्यैः[1] सम्पूज्य तस्मिन्नेव बीजे संहरेत्।

अक्खरमन्त[2]विवज्जियओ[3]
न उ[4] सो विन्द ण वित्त।
एसो परममहासुहओ[5]
न उ फेडिअ ण उ खित्त[6]॥

इत्यनेन स्तूयात्। ततोऽमृतास्वादविधिना पञ्चामृतप्रदीपं निष्पाद्य सितहुँकारजवज्रमयीं जिह्वां कृत्वा त्र्यक्षरेणाधिष्ठाय तेन कुरुकुल्लारूपमात्मानं प्रीणयेत्। ध्यानखिन्नो मन्त्री मन्त्रं जपेत्। तथैव ह्रीःकारं संवेष्ट्य स्थितां ॐ कुरुकुल्ले ह्रीः स्वाहा इत्यष्टाक्षरमन्त्रमालां [8]दीपमालामिव ज्वलन्तीं मनसाभिलिख्य द्रुतविलम्बितादिदोषरहितो रक्त[9]चन्दनाक्षमालया जपेत्। कोटिजापेन

---

[1] AC ०विद्रवैः। [2] AC मन्त्रं। [3] A विवर्ज्य।
[4] AC भोउ। [5] A ०सुहो।
[6] A णाउ चित्त। छाया—

अक्षरमन्त्रविवर्ज्जितो न तु स बिन्दुर्न वृत्तः।
एष परममहासुखदो न तु स्फोटितो न तृप्तिप्रः॥

[7] A ०समाधि।
[8] AC omit. [9] A ०चन्द्रेण०।

षड्गतिचक्रपतितान् सत्त्वान् वशीकरोति। सन्ध्यान्तरे[1] तु झटिति निष्पन्नं कुरुकुल्लारूपमात्मानं विचिन्त्य पूजास्तुत्यादिकं कुर्य्यात्। अतव्याख्यानादिसर्व्वक्रियां कुर्व्वाणो भगवत्यहङ्कारेणैव कुर्य्यात्। ततो यथाशयनप्रणिधानानि कुर्य्यादिति।

उपदेशश्चात्र गुरुपरम्परायातो लिख्यते। स्वहृद्बीजं स्रवदमृतद्रवं हृदयादुत्थाय मस्तकं[2] वामावर्त्तेन संवेष्ट्य दक्षिणकर्णविवरेण निष्क्रम्य दक्षिणकरे धनुर्गुणस्थशरपुङ्खविवरेण तत्कलिकाकर्णिकायां प्रवेश्य तद्रश्मिना तान् विकाश्य स्फुरणेन विभवगत[3]सत्त्वहृदयेषु प्रवेश्य तत्कमलानि सञ्चोद्यानीय पुनस्तत्रैव प्रवेश्य कलिकां कृत्वा शरात् कर्णविवरेण मस्तकं दक्षिणावर्त्तीकृत्य भ्रूमध्ये स्थित्वा अवधूतीमार्गेण कण्ठ[4]हृदयनाभिपर्य्यन्तमहासुखालोकस्थानां यथोपदेशं प्रविशेत्। ततः प्रज्ञोपायामलसमाधिसम्भूतसत्सुखापूर्णमिव स्वदेहं त्रैलोक्यं च पश्येत्। तत्क्षणमिमां गाथां च स्मरेत्—

आइ ण अन्त ण मज्झु नहि न उ भव ण उ निव्वाण।
एहु सो परममहासुहओ ण उ पर ण उ अप्पाण[5]॥

एवं [पुनः] पुनर्यावत् सत्त्वान् वशीकृत्य तान् महाबोधौ साक्षादेवं नियोजनक्षमो भवेदिति। एवं साध्यस्य साध्याया वा कुरुकुल्लारूपभावितायास्तद्बीजं तथैव साधकशरात्

[1] AN ०न्तरेण।
[2] AN ०कमावर्त्तेन।
[3] NAN त्रिभगवत्०।
[4] N ०हृदयनाभि०।
[5] छाया—
आदिर्नान्तो न मध्यो नहि न तु भवो न तु निर्वाणम्।
एष स परममहासुखदो न तु परो न त्वात्मीयः॥

साध्यकरस्थशरकलिकायां तद्रश्मिविबुद्धायां तथा दक्षिण-कर्णेन प्रवेश्य तथैव [1]गत्वा तथैव स्थित्वा तथैव प्रविश्य तत्स्थानं गत्वा तथैव तिष्ठेत् श्रीकुरुकुल्ला[2]रूपेण च ह्रीःकारं मदनातपत्रनिहितमित्याद्युक्तम्। ततोऽवश्यं सा साध्यसाधकपरवशहृदया सर्व्वकार्य्यकरणोत्सुका भवतीति।

विधायासादितं पुण्यं कुरुकुल्लाख्यसाधनम्।
तेन सर्व्वजनाः सन्तु वश्यबोधिनियोजने॥

॥ श्रीहेवज्रतन्त्रक्रमेण स्वाधिष्ठानकुरुकुल्लासाधनं समाप्तम्।

। कृतिरियं सहजविलासस्य ॥

---

184.

[3]नमः कुरुकुल्लायै।

पूर्व्वोक्तविधानेन किन्तु स्वहृदीन्दौ ह्रीःकारबीज-निष्पन्नां रक्तवर्णां दक्षिणेन शरोद्यतहस्तां वामेन रक्तो-त्पलधनुर्धारिणीं ध्यायात्। तत आकर्णपूरितधनूरक्तो-त्पलकलिकानिभशरेण साध्यं पुरतो विचिन्त्य हृदि विन्ध्येत्। पूर्व्वोक्तमुद्रया हृद्दूर्णाकण्ठमूर्द्धसु विन्यस्य ततो जापः— ॐ कुरुकुल्ले ह्रीः देवदत्तं वशमानय स्वाहा।

॥ संक्षिप्तकुरुकुल्लासाधनं समाप्तम् ॥

---

[1] A सत्त्वास्तथै०। [2] A omits ०रूपेण।

[3] This *Sādhana* is found only in AC: see fol. 34.

## 185.

[1]नमः शुक्लकुरुकुल्लायै ।

कुरुकुल्लां नमस्यामि सितवर्णां चतुर्भुजाम् ।
इषुकार्म्मुकहस्ताभ्यां सितोत्पलाभयप्रदाम् ॥
पद्मासनस्थितां दिव्यां [रक्ताटङ्कमौलिकाम्] ।
दंष्ट्राकरालत्रिनेत्रां पिङ्गोर्द्ध्वकेशमूर्द्धजाम् ॥

अथ सुखासनोपविष्टः स्वहृदये चन्द्रमण्डलं तदुपरि ह्रीःकारं दृष्ट्वा सितवर्णस्फटिकोऽयं शुभ्रज्योतीरश्मिविस्फुरितान् तद्रश्म्याकृष्टशुभ्रबुद्धबोधिसत्त्वान् पुरतः पूजयित्वा शिरसा प्रणम्य तदग्रतः पापदेशनापुण्यानुमोदनां ततः परिणामनां त्रिशरणगमनबोधिचित्तोत्पादनं कृत्वा चतुर्ब्रह्मविहारान् भावयेत्। परहितचिन्तां मैत्रीं परदुःखनाशक्रियां करुणां परसुखतुष्टिं मुदितां परदोषोपे[क्षामुपे]क्षां भावयेत्। ततः शून्यतामन्त्रमुच्चरेत् ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। अथ पूर्व्वोक्तह्रीँकारेण स्फुरणसंहरणं कृत्वा आदिक्रमेण सितवर्णां कुरुकुल्लामात्मानं भावयेत्। स्वहृदये सितवर्णाष्टदलपद्मं लीनं तदुपरि सूर्य्यमण्डलं तत्रैव ह्रीँकारसम्भवां देवीं विचित्ररूपां सितवर्णां चतुर्भुजां वामे चापधरां दक्षिणेनाकर्णपूरितशरां वामे सितोत्पलां दक्षिणेनाभयहस्तां पद्मासनस्थितां दिव्यवस्त्रशोभितां श्वेतपट्टांशुकोत्तरीयां विकटदंष्ट्रां त्रिनेत्रां ऊर्द्ध्वपिङ्गलकेशां अमिताभमुकुटिनीं सूर्य्यासने सूर्य्यप्रभां नानाभरणभूषितां नीलानन्तबद्धकेशां रक्ततक्षककुण्डलां पीतशङ्खपालकण्ठिकां विश्व[वर्ण]कुलिककेयूरां हरित-

[1] This *Sādhana* is found only in MS B: see fol. 92.

कर्कोटकयज्ञोपवीतां सितवासुकिमेखलां मृणालधवलमहा-पद्महारभूषणां सितनन्दपनन्दोनागराजेन कृतपाद-नूपुराम्। अथ पुनरष्टकुरुकुल्लानागाः[1] कृताञ्जल्यो[2] भूत्वा पादतले निवसन्ति। एवं समयसत्त्वं निष्पाद्य ज्ञानसत्त्वेन सहैकीकृत्य भावयन् पूजयेदिति। पूर्वादिदिक्षु अक्षोभ्य-वैरोचनरत्नसम्भवामोघसिद्धयः। अग्निकोणादिषु लोचना-मामकीपाण्डरातारा:।

एता[श्च] भावनाः कृत्वा पूजयेत् क्रमयोगतः।
पूजां कृत्वा दृढीकृत्य जापमन्त्रमनुस्मरेत्।
यस्या[श्च] जापमात्रेण त्रैलोक्यं वशमानयेत्॥

ॐ कुरुकुल्ले ह्रीः स्वाहा। एतज्जापमात्रेण त्रैलोक्य-विजयी भवति। सितवर्णेन निर्विषीकरणं स्फटिकेन लभते प्रज्ञां हेमेन वश्यां पुष्करेण विनाशनम्।

अथ पु[3]रक्षोभमन्त्रं कथयिष्यामि येन सिध्यन्ति त्रिदशाः। ॐ कुरुकुल्ले अमुक च ट त प य श ह्रीँ फट् स्वाहा। अष्टसिद्धिनाम मन्त्रमिदम्। अष्टौ परीक्षा-प्रदायिकां अष्टैश्वर्य्यतां भावयेत्। त्रिदशैरपि पूज्यते। अथापरध्यानं वक्ष्ये—

गुह्यात् गुह्यतरं जापं कथितं सिद्धिहेतुना।
मस्तकतालुकण्ठेषु हृदये स्तनयुग्मके॥

कक्ष्यां वक्षे पादद्वये न्यसेत् मन्त्रम्। योऽर्थसिद्धये क्षोभयेत् भुवननागान् आकर्षयेच्चासुरदेवता अपि ब्रह्मरुद्रादि-देवानपि किं पुनः क्षुद्रमानुषान्। उच्चारितो हि मन्त्राणां

---

1 MS ०रष्टनाग०।
2 MS ०ञ्जलियो।
3 MS पुनर०।

अनुच्चारितोऽयुतं जपेत्, उच्चारोऽनुच्चारवर्ज्जितः अयुतसहस्रं जपेत्। एवं जापमात्रेण त्रैलोक्यव्यापी योगी गच्छेत् भुवनचतुर्द्दशम्। स्वेच्छादर्शनं ददाति। कथितं मन्त्र-साधने—

लक्षैकेन देवराजा प्रजा[लोकोऽ]युतेन तु।
पशुपक्ष्यादयः कोट्या सप्तलक्षेण चासुराः॥

शतसहस्रेण मन्त्रेण वज्रगर्भाभिसम्बोधिपदं लभते। अत्रोपदेशोऽयम्—

तं कुरुकुल्लारूप करिये ह्यग्र
अहणिसि वीअ हन्ते देह्यग्र।
गुरुवअणे दिढ करि माणहु
भणअ सबरपा विसढा करे हाणहु[1]॥

त्रैलोक्यो[त्तमो]त्तमा विद्या सितकुरुकुल्लायाः।
साधनं विषदन्तस्य सर्व्वकर्म्मकरं शुभम्॥

॥ सितकुरुकुल्लासाधनं समाप्तम्।

। कृतिरियं सिद्धशबरपादानाम्॥

---

[1] छाया—
तत् कुरुकुल्लारूपं कृत्वा ये ह्यग्रेऽहर्निशं बीजं क्रीः ते ददत्यग्रे।
गुरुवचने दृढं कृत्वा मानं भणति शबरपादो विषाणां कुरुत हानिम्॥

## 186.

प्रथमं स्वहृदि रक्तवर्णं चन्द्रमण्डलं विभाव्य रक्तवर्णं ह्रीःकारं पश्येत्। ततः पापदेशनादिकं निवेदयेत्। पश्चात् शून्यतां भावयेत्। शून्यतायां स्थितो योगी रेफेण सूर्य्यं पुरतो विभाव्य तदुपरि हुँकारं नीलवर्णं विभावयेत् मतिमान्। तत्परिणतं विश्ववज्रं तत्परिणतां वज्रमयीं भूमिं वज्रप्राकारं [1]वज्रपञ्जरबन्धनं च। ॐ रक्ष रक्ष हुँ हुँ हुँ फट् फट् फट् स्वाहा। पश्चाद् योगी रक्तवर्णं पद्मं [2]तदुपरि चन्द्रमण्डलं तदुपरि रक्तवर्णह्रीःकारपरिणतं रक्तोत्पलम्, तदुपरि पुनश्चन्द्रमण्डलम्, तत्परिणतां कुरुकुल्लामात्मानं विचिन्तयेत् अर्द्धपर्य्यङ्केन नाट्यस्थां च व्याघ्र[3]चर्म्मावृतकटिं पञ्चमुद्राविभूषितां ऊर्द्धकेशां पिङ्गलकचां अमिताभनाथशोभितशिखां धनुर्बाण-तथोत्पलाङ्कुशहस्ताम्। अत्र स्थाननियमो नास्ति, नापि भोजने नियमः। अत्र मन्त्रजापस्तु क्रियमाणः यथा न कश्चित् प्रत्येति तथा कर्त्तव्यः। ॐ कुरुकुल्ले ह्रीः स्वाहा।

लक्षैकेन वशो राजा प्रजालोकोऽयुतेन तु।
पशुपक्ष्यादयः कोट्या सप्तलक्षेण चासुराः॥

॥ हेवज्रक्रमकुरुकुल्लासाधनं समाप्तम्॥

---

[1] A वज्रेण बन्धनं।

[2] AC omit तदुपरि चन्द्रमण्डलं।

[3] C नवव्याघ्र०।

## 187.

नमः कुरुकुल्लायै ।

प्रातः प्रोन्मीलदर्कद्युतिमतिमसृणज्योतिरक्षीणलक्ष्मी-
मुद्भास्वद्रागवज्रस्फुरदुरुकिरणासङ्गिपिङ्गोर्द्धकेशीम् ।
यामेकाग्रं विचिन्त्य त्रिदशपुरवधूदोर्लताबन्धनानि
प्राप्यन्ते[1] तां नमामो जगदसमवशीकारभैषज्यसिद्धिम् ॥
अध्यासीनः श्मशाने गहनगिरिगुहागह्वरक्रोधसन्ध्यौ
वृक्षे वाऽथ स्वगेहे[2] क्वचिदपि विगतोपद्रवे वा प्रदेशे ।
श्रीहेवज्रक्रमेण त्रिभवपरिणतज्ञाननिस्यन्दमूर्त्तिं
ध्यायाद् रक्तोत्पलास्र[3]द्युतिदलितजगद्द्वन्द्व[4]निर्व्वाण-
मायाम् ॥
आदौ सत्त्वेषु[5] मैत्रीं हिततनयगतस्नेहरूपां बिचिन्त्य
ग्लानैकापत्यबोधात् तदनु करुणया भावयन् सर्व्व-
सत्त्वान् ।
पश्यंस्तत्[6] सौख्यसम्पद्भरमतिमुदितः सत्पराथैकमूर्त्तिं
ध्यायात्तत्सर्व्वसत्त्वेष्वहितहितमतिम्लानशून्यामुपेक्षाम् ॥
एतत् सर्व्वं समाप्य स्वहृदयकलितस्फूर्ज्जदर्कस्थर[7]क्त-
ह्रीःकारांशुयुतांस्तैर्गुरुसुगतसुतैः सार्द्धमाकृष्य बुद्धान् ।
यत्किञ्चिज्जन्मजन्मसुकृतमनुमतं कारितं वा तदेषु
म्लानं कर्म्म प्रकाश्य कुशलमपि तथैवानुमोद्यं च तेषाम् ॥
सर्व्वं कालव्यतीतं तदनु भगवतः सद्गुरोराज्ञयैव
ज्ञात्वा ध्यायात् तदग्रं सहजमनुपमं धर्म्मरूपं जिनानाम् ।

---

[1] AC प्रोष्यन्ते ।  [2] A त्वगेहे ।
[3] A ०पलास्त्र० ।  [4] AC जगद्धर्व ।
[5] N सत्त्वेऽत्र ।  [6] AC पुण्यं तत् ।  [7] A ०स्फुर० ।

तत्सार्व्वज्ञं तदेव त्रिभुवनमखिलं तत्तदाभागमूर्त्त्या
सर्व्वासां पारमीणां परममपरिणतं मञ्जु[1]तत्त्वं तदेव ॥
निर्म्मग्नस्तत्र योगी प्रणिधिघटनया धर्म्मकायस्वभावो
जातः सम्भोगरूपारजनितकिरणस्फारमेकार्कचक्रम् ।
हुँकारस्तत्र नीलद्युतिरथजनये [2]विश्ववज्रं तदात्म-
प्राकारं पञ्जरं च प्रबलवरमहामारवीरैरभेद्यम् ॥
पश्चाद् रक्तारविन्दप्रणयि[3]नीतरणौ भासमानं कणाभं
ह्रीःकारोद्भूतरक्तोत्पलमुपरि ततो विस्फुरत् सूर्य्यबिम्बम् ।
तस्मिन्नुग्रोऽतिविश्वभ्रमदरुणमहारोचिराभासुरो ह्रीः
देवी स्यादुग्रमारव्यतिकरदहनोद्दामतीव्रानलश्रीः ॥
प्राचीनार्कप्रकाशां निरतिशयमहायौवनव्यक्तगर्व्वां
भास्वत्पिङ्गोर्द्ध्वकेशीं स्तनजघनभरां मृदु[4]शृङ्गार-
सारामु ।
वामासक्तारुणाभत्रिनयनकिरणस्पृष्टदंष्ट्राकरालां
प्रस्फूर्ज्जद्वक्त्रगर्भभ्रमदुरुरसनाकोटिरुद्दामरोचिः ॥
विश्वाग्निस्फारदीप्त[5]द्युतिस्मरशवासक्तवामाङ्घ्रिकोटि-
विन्यस्योर्द्ध्वं स्फुरन्ती तदितरचरणं वामजानोरुपान्ते ।
विस्तीर्णद्वीपिदेहच्छदकलितगुरुश्रोणिभारा[6]लसाङ्गि
निर्य्यद्रक्ताम्बुधारामुरसि नरशिरश्चक्रमालां वहन्ती ॥
उन्नालोन्निद्रमुखस्फुरदरुणविशालोत्पलद्वैतक्लृप्त-
क्रीडत्कोदण्डकाण्डप्रकटितचिकणकर्णसन्धानपूर्णाम् ।
आकृष्योग्राङ्कुशेन त्रिभुवनमखिलं पालयन्तीव धात्रीं
रक्ताब्जं वामपाणौ निरुपमसहजं रागराज्यं तदेव ॥

---

[1] AN मञ्ज० । [2] AC धर्म्मचक्रं । [3] A ०प्रणिधि० ।
[4] A भरोन्मृदु०, N भरोमुद्र० । [5] N ०दीप्र० ।
[6] AC ०हारा० ।

स्वच्छन्देन्दुप्रकाशश्रियमुपहसतः पञ्चमौलौ कपालान्
पञ्चाङ्गं पञ्चमुद्राभरणपरिणतं पञ्चबुद्धक्रमेण ।
बिभ्राणा रागवज्रं शिरसि भगवती तन्मयः साधकेन्द्र-
स्तन्मन्त्रं [1]क्लीवजापो जपति यदि सुरैर्वन्दनीयस्तदङ्घ्रिः ॥

एतत् साधनमुत्तमं भगवतो लीलाशनेराज्ञया
यत् कृत्वा करुणाभिधानकविना पुण्यं समासादितम् ।
तेनास्तामतिनिष्कलङ्कविमलप्रज्ञोदयस्फारितां
स्वच्छन्दप्रसरप्रभास्वरमहासौख्यप्रतिष्ठं जगत् ॥

॥ कुरुकुल्लायाः साधनं श्रीहेवज्रतन्त्रोद्धृतं समाप्तम् ।
। कृतिरियं कवेः करुणाभिधानस्य । एवं श्लोकाः १२ ॥

---

188.

[2]ॐ कुरुकुल्लायै नमः ।

यस्याः स्मरणमात्रेण सदेवासुरमानुषाः ।
ध्रुवं किङ्करतां यान्ति कुरुकुल्लां नमामि ताम् ॥

आदौ मन्त्री कृतमुखशौचादिकः सुखासनस्थः [3]स्वहृद्य-कारजचन्द्रस्थितह्रीःकाररश्मिसमानीतकुरुकुल्लादेवीं हृद्बीजनिर्यात[4]पूजाविशेषैः सम्पूज्य वन्दनां पापदेशनां पुण्यानुमोदनां तत्परिणामनां त्रिशरणगमनं बोधिचित्तोत्पादनं चतुर्ब्रह्मविहारीभावनां च कृत्वा शून्यतां विभाव्य मन्त्रेण चाधिष्ठाय हृद्बीजनिष्पन्नरक्तकुवलये अकारजचन्द्रमण्डले

---

[1] AC क्लीवजापा ।
[2] B gives the *Namaskāra* ; other MSS have only ॐ ।
[3] B अकारज स्वहृच्चन्द्रे रक्तह्रीःकार° ।  [4] B °निर्जात° ।

तां विभाव्य तत्सर्व्वपरिणतां भगवतीं रक्तवर्णां रक्तचन्द्र-पद्मासनां रक्ताम्बरां रक्तकिरीटवतीं चतुर्भुजां सव्ये अभयप्रदां अन्येन समापूरितशरां वामेन एकेन रत्न-चापधरां अपरेण रक्तोत्पलधरां अमिताभमुकुटीं कुरु-कुल्लापर्व्वतोदरनिवासिनीं शृङ्गाररसोज्ज्वलां नवयौवनां कुरुकुल्लां भावयेत् यावत् खेदो न भवति, खेदे तु मन्त्रं जपेत्। तत्रायं मन्त्रः— ॐ कुरुकुल्ले ह्रीः स्वाहा। साध्यं वशीकर्त्तुकामस्तु रक्ताशोकतले सिन्दूरेण त्रिकोणमण्डलकं कृत्वा तत्र रक्तकुसुमैर्देवीं सम्पूज्य स्वयं तु रक्ताम्बरः साध्यं पादेन आक्रम्य नग्नं विह्वलं मुक्तकेशां हृदि रक्तोत्पल-कलिकया विध्यन्निव जपेन्मन्त्रः। तत्रैष मन्त्रः— ॐ कुरुकुल्ले ह्रीः अमुकं मे वशीकुरु स्वाहा।

॥ इति कुरुकुल्लासाधनम् ॥

---

## 189.

नमः कुरुकुल्लायै।

ॐ कुरुकुल्ले स्वाहा। आर्य्य[1]तारायाः हृदयं अप्रतिहत-शक्तिं त्रिभुवनवशकर्म्मणि प्रथितं पूर्व्वोक्तसमाधिस्थोऽक्षर-लक्षं जपेत्। पश्चात् पुष्पधूपविलेपनगन्धचूर्णताम्बूलादि यस्यानेनाभिमन्त्र्य दीयते स वशो भवति। [2]सुगन्धिधूपेन

[1] N ०तारापादानां।
[2] सुगन्धि......भवति is omitted in A.

स्वमात्मानं धूपयेत्, सर्व्वजनप्रियो भवति। बन्धूक[1]-कुसुमानि होमयेत् यस्य नाम्ना स वशो भवति। खानं पानं चाभिमन्त्र्य यस्य दीयते स वशो भवति। महा-पुरुषवशीकरणे श्वेतसर्षपो होतव्यः। पश्चात् सुतिथि-नक्षत्रादिना च भगवत्याः पूजादिकं कृत्वा कुङ्कुम-गोरोचनाकर्पूराद्यैः भूर्ज्जे वस्त्रे वा षोडशारमुत्पलपत्राकारं चक्रमभिलिख्य च[2]क्रमध्ये मन्त्रसहितं साध्यसाध्यानां नाम लिखनीयम्। पत्रेषु कु रु कु ल्ले अक्षरचतुष्टययन्वितं साध्यस्य केवलं नाम लिखनीयम्। बहिराःकारेण त्रिगुणी-कृतं चक्रं रक्तसूत्रेण संवेष्ट्य मदनमयपुत्तलिकाया हृदय-मध्ये निक्षिप्य खदिराङ्गारेण तापयेत्, पादाकृष्टिं कुरुते। पुरुषस्य स्त्रियो वा वशीकरणे ताम्र[3]सूच्या योनौ पादयो-र्विद्ध्वा तापयेत्[4], वशीभवत्यत्र न संशयः। महत्या श्रद्धया इमं मन्त्रराजं भगवत्याः पूजां कृत्वा जप्तव्यम्। एवमनेन क्रमेण सर्व्वसिद्धिर्भवति।

॥ [5]इति कर्म्मप्रसरप्रयोगः ॥

---

[1] Ba रक्त०।
[2] A ०क्रमम०।
[3] AC ०पुष्पा।
[4] A तप०।
[5] N omits this Colophon.

## 190.

[1]गँ रँ वँ यँ पँ शँ चँ डँ ॐ कुरुकुल्ले सर्व्वदुष्टान् नाशय नाशय कीलय कीलय भञ्जय भञ्जय मर्द्दय मर्द्दय ध्वंसय ध्वंसय अपसारय अपसारय शान्तिं मे कुरु पुष्टिं मे कुरु [2]अभिमतं मे कुरु सर्व्वसत्त्वान् [3]वश्यं मे कुरु ह्रीः स्वाहा। ॐ ह्रीँ श्रीँ हुँ हेँ हाँ हाः।

॥ कुरुकुल्लाया बलिविधिः ॥

---

## 191.

नम उष्णीषविजयायै।

पूर्व्वोक्तविधानेन चन्द्रे सितभ्रूँ[4]कारजां शुक्लां त्रिमुखां त्रिनेत्रां नवयौवनां नानालङ्कारधरां अष्टभुजां भगवतीं चिन्तयेत् पीतकृष्णदक्षिणेतरवदनां दक्षिणचतुर्भुजैः विश्ववज्रपद्मस्थबुद्धबाणवरदमुद्राधरां वामचतुर्भुजैः चाप-तर्ज्जनीपाशअभयहस्तपूर्णकुम्भाः चैत्यगुहागर्भस्थितां वैरोचनमुकुटिनीं निष्पाद्य स्वबीजं पद्मस्थं हृदि[5] ध्यायात्। तदनु शिखाललाटकण्ठनाभिचरणेषु यथाक्रमं हुँ त्राँ ह्रीः[6] अं [7]अः इति पञ्चाक्षराणि पश्येत्। ततो मन्त्रं जपेत्, ॐ भ्रूँ स्वाहा।

॥ उष्णीषविजयासाधनम् ॥

---

[1] गँ...डँ is omitted in NBa.

[2] N reads अभिमतं मे कुरु after the second अपसारय।

[3] B वश्री मे। [4] C त्रँ०। [5] Ab omit.

[6] AN क्रीँ। [7] Ab अ।

192.

[1]पूर्व्वोक्तविधानेन हृदि चन्द्रमण्डले सितॐकारजां सितातपत्रापराजितां भगवतीं त्रिमुखां षड्भुजां प्रतिमुखं त्रिनयनां शुक्लां नीलारुणदक्षिणवाममुखीं चक्राङ्कुशधनुर्द्धरदक्षिणकरां सितवज्रशरपाशतर्ज्जनीधर-वामकरां सक्रोधदृष्टिकां सर्व्वग्रहविध्वंसिनीं दिव्यालङ्कार-वस्त्रवतीं[2] वैरोचननायकां ध्यात्वा मुद्रां बन्धयेत्। दक्षिण-हस्तमुष्टितर्ज्जनीं हृदि संस्थाप्य वामहस्तमुष्टिमुत्थापयेत्। जापः— ॐ सितातपत्रापराजिते सर्व्वग्रहान् त्रासय त्रासय हन हन[3] [4]ह्रुँ ह्रुँ [5]हुँ फट् स्वाहा।

॥ इत्यार्य्यसितातप[6]त्रापराजितासाधनम् ॥

---

193.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं अष्टदलकमलो-परि सूर्य्यस्थहुँकारजवज्रं वँ[7]काराधिष्ठितवरटकं ध्यात्वा तत्परिणतां वज्रचर्च्चिकां त्रिनेत्रामेकमुखीमर्द्धपर्य्यङ्क-ताण्डवां मृतकासनस्थां कृशाङ्गीं दंष्ट्रोत्कटभैरवां नरशिरोमालाविभूषितकण्ठदेशा[8]मस्थ्याभरणविभूषितां पञ्चमुद्राधारिणीमक्षोभ्यमुकुटिनीं व्याघ्रचर्म्मनिवसनां मुक्तकेशीं षड्भुजां दक्षिणे वज्रखड्गचक्रधारिणीं वामे कपालमणिकमलधरां रक्तवर्णां कर्म्मानुरूपतः शुक्लादिवर्णयुक्तां च ध्यात्वा स्वहृच्चँकारकरानीतज्ञानचक्रं

---

[1] C begins with ॐ।
[2] ANC ०लङ्कारवतीं।
[3] ANC हन हन हन हन।
[4] C ह्रूँ ह्रूँ।
[5] ANC ऊँ ऊँ फट् फट्।
[6] B ०तात्प०।
[7] B रं०।
[8] AC ०वेशा०।

पुरः[1] संस्थाप्य पूजादिकं निर्व्वर्त्त्य प्रवेशयेत्[2] ततो मन्त्रं जपेत्— ॐ वज्रचर्च्चिके हुँ स्वाहा ।

॥ इति वज्रचर्च्चिकासाधनम् ॥

---

194.

नमो महाप्रतिसरायै ।

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरम[3]कारजेन्दु[4]-मण्डले पीत[5]प्रँकारजं [6]कृतविविधरश्मिपरार्थं परिणम्य भगवतीं महाप्रतिसरां झटित्यात्मानं निष्पादयेत्, पीतां चतुर्म्मुखां त्रिनेत्रां अष्टभुजां प्रथममुखं पीतं दक्षिणं सितं पश्चिमं नीलं वामं रक्तं दक्षिणभुजैः खड्गचक्र-त्रिशूलशरधरां वामभुजैः परशुचापपाशवज्रधरां विश्व-पद्मचन्द्रासने ललिताक्षेपसंस्थितां रक्तप्रभामण्डलां सर्व्वाभरणभूषितां विचित्रवस्त्रवसनां पट्टांशुकोत्तरीयां नानारत्नमुकुटीम् । एवं विचिन्त्य ततः कायवाक्चित्तचन्द्रेषु ॐ आः हुँ सितपीतनीलत्र्यक्षराणि चिन्तयेत् । ततः स्तनान्तरे[7] चन्द्रस्थप्रँकारं विचिन्त्य नानाविधदेवतीभि-रात्मानं पूजितं दृष्ट्वा तावद् भावयेत् यावत् खेदो न जायते । खेदे सति [8]स्वहृच्चन्द्रे मुक्ताहारोपमं मन्त्रं पश्यन् जपेत्— ॐ मणिधरि वज्रिणि महाप्रतिसरे हुँ हुँ फट् फट् स्वाहा ।

॥ महाप्रतिसरासाधनम् ॥

---

[1] B पुनः ।　[2] B ०त्तत् ।　[3] B ०मं० ।
[4] Ab ०जचन्द्र० ।　[5] ANC ०पं० ।　[6] Ab omit कृत०...भगवतीं ।
[7] AC ०स्तानुत्तरे ।　[8] Ab हृच०, B स्वहृदि ।

## 195.

प्रथमं योगी समाहितचित्तो भूत्वा हृदि पँकारपरिणतं विश्वपद्मं तत्रोपरि अकारपरिणतं चन्द्रमण्डलं तत्र पीतं [1]प्रँकारं विन्यस्य तद्विनिर्गतरश्मिभिः गुरुबुद्धबोधिसत्त्वान् सञ्चोद्यानीयाग्रतो विचित्रासनोपविष्टान् वन्दनापूजना-पापदेशनापुण्यानुमोदनात्रिशरणगमनबोधिचित्तोत्पाद-पुण्यपरिणामनाक्षमापनाः कुर्यात्। ततो मैत्रीकरुणा-मुदितोपेक्षाभावना। ॐ शून्यताज्ञानवज्रस्वभावात्मको-ऽहमित्युच्चार्य्य शून्यं विभाव्य ततः स्वचित्ते झटिति चन्द्रं पीतप्रँकारं [च] विभाव्य तत्परिणामेन प्रतिसरां सुपीतां रत्नमुकुटिनीं पीतशुक्लपीतरक्तचतुर्म्मुखीं त्रिनेत्रामष्टभुजां दक्षिणभुजैः खड्गचक्रत्रिशूलशरधारिणीं वामभुजैः पाश-परशुचापवज्रधारिणीं पद्मचन्द्रासने ललिताक्षेपस्थितां नानारत्नाभरणविभूषितां विभाव्य तस्याः शिरःकण्ठ-हृदयोपहृदयेषु चन्द्रस्थशुक्लरक्तपीतकृष्णान् ॐ आः [2]प्रँ हुँकारान् विन्यस्य एतन्मन्त्रोच्चारेणात्मानं देवीरूपमधिति-ष्ठेत्। ततः स्वहृदयान्निर्गतरश्मिभिरक्षोभ्यादीन् सञ्चोद्या-नीय[3] अभिषेकं गृहीत्वा मुकुटे अधिपतिमक्षोभ्यं चिन्तयेत्।

---

[1] N पं०। [2] A पं।

[3] After this the MS A adds a long fragment, which is unnecessary here, consisting of the *Sādhanas* of Śaptaśatika Hayagrīva (end only), Trailokya-vijaya and Vajrajjvālānalārka (beginning). It repeats this portion again at the end. The reason seems to be that some leaves of the original codex were not in order. See *Infra*.

ततः स्वहृदयात् पूजादेवीः संस्फार्य्य पूजयित्वा शताक्षर-मन्त्रमावर्त्त्य च तावद् भावयेत् यावत् खेदो न जायते। खिन्ने चित्ते सति मन्त्रं जपेत्—ॐ मणिधरि वज्रिणि महाप्रतिसरे हुँ हुँ [1]फट् फट् स्वाहा[2]। ततोऽपि मन्त्रः—ॐ वज्रसत्त्व समयमनुपालय वज्रसत्त्वत्वेनोपतिष्ठ दृढो मे भव सुतोष्यो मे भव सुपोष्यो मे भव अनुरक्तो मे भव सर्व्वसिद्धिं मे प्रयच्छ सर्व्वकर्म्मसु च [3]मे चित्तं श्रेयः कुरु हुँ हहहहहोः भगवन् सर्व्वतथागतवज्र मा मे मुञ्च वज्रीभव महासमयसत्त्व आः—शताक्षरमन्त्रः। उत्थानकालसमये पूजादिकं कृत्वा क्षमापयेत्।

॥ इति महाप्रतिसरायाः साधनं समाप्तम् ॥

---

196.

मैत्रीं सर्व्वजनेऽपि जन्ममरणव्याधिव्यथा[4]विह्वले
कारुण्यं मुदितामुपेक्षणमतिं कृत्वोपदेशादतः।
मायास्वप्नसमं समग्रमखिलैः शून्यं विकल्पैर्जगत्
विज्ञानैकवपुर्विभाव्य पुरतो मन्त्री ततस्तेन च ॥
शुभ्राकारशशाङ्कबिम्ब[5]लुठितां पीताकृतिं प्रँकृतिं
कुर्व्वाणां निजरश्मिभिः प्रतिदिशं विश्वस्य सद्वाञ्छितम्।

---

[1] One फट् is dropped in N.
[2] AC omit.
[3] B चित्तं मे।
[4] AN ०व्याधीन् यथा।
[5] A ०विन्दु०।

ध्यात्वा विश्वसरोजगर्भविलसच्चन्द्रासनस्थायिनी
पीतापीतसितासितारुणमुखं नेत्रत्रया[1]लङ्कृतम्॥
मौलीरत्नमयं विचित्रवसनं रक्तप्रभामण्डलं
लीलाक्षिप्तपयोधरयुगासक्तोत्तरीयांशुकम्।
खड्गं चक्रशरत्रिशूलपरशुश्रीपाशवज्रं धनु-
र्बिभ्राणा भुजपल्लवैः प्रतिसरा भूयात् स्वयं साधकः॥
ॐ आः हुँ इति चाक्षरैः पटु[2]मतिर्दृष्ट्वे गिरिस्वान्तके
दृष्ट्वा चन्द्रगतं सितं विधियुतं पीतं च नीलात्मकम्।
[3]सच्चन्द्रे कुच[4]युग्ममध्यमिलितप्रँकारजन्मार्चिषा
निष्पन्नैः परिपूरितं निजवपुर्ध्यायात् स देवीगणैः॥
एवं च स्फुरणेऽपि संहृतिविधौ सञ्जातखेदो यदा
मुक्तादामनिभं तदा स्थिरमतिः रश्मिप्रतानोज्ज्वलम्।
हृच्चन्द्रो[5]परि मन्त्रराजमसमं ध्यायन् जपेदीदृशं
नित्यं सादरमञ्जसा बहुतरं कालं विशुद्धाशयः॥

तत्रायं मन्त्रराजः— ॐ मणिधरि वज्रिणि महाप्रति-सरे हुँ हुँ फट् फट् स्वाहा।

॥ प्रतिसरासाधनम्॥

---

[1] AC ०संस्कृतं। [2] A यदु०।
[3] AC सर्व्वेन्द्रकुचयुगा०। [4] N कुर०।
[5] A चन्द्रो०।

197.

पूर्व्वोक्तविधानेन विश्वपद्मचन्द्रे हरितमाँकारजां महामायूरीं हरितवर्णां त्रिमुखां षड्भुजां प्रतिमुखं त्रिनेत्रां कृष्णशुक्लदक्षिणेतरवदनां दक्षिणत्रिहस्तेषु यथाक्रमं मयूरपिच्छबाणवरदमुद्राः तथा वामत्रिहस्तेषु रत्नच्छटाचापोत्सङ्गस्थकलशा विचित्राभरणां शृङ्गाररसां नवयौवनां चन्द्रासने[1] चन्द्रप्रभावतीं अर्द्धपर्य्यङ्किनीममोघसिद्धिमकुटां भावयेदात्मानम्। ततोऽस्याः शिरःकण्ठहृदयनाभिस्थचन्द्रेषु यथाक्रमं ॐ आः माँ हुँ इत्यक्षरचतुष्टयं विभाव्य स्फुरणसंहरणं कुर्व्वीत[2]। ततो मन्त्रं जपेत्— ॐ महामायूरी विद्याराज्ञी हुँ हुँ फट् फट् स्वाहा।

॥ इत्यार्य्यमहामायूरीसाधनम् ॥

———

198.

पूर्व्वोक्तविधानेन विश्वपद्मचन्द्रे बुँकारोद्भवां महासाहस्रप्रमर्द्दनीमात्मानं ध्यायात् शुक्लामेकमुखीं षड्भुजां दक्षिणत्रिभुजेषु खड्गबाणवरदमुद्राः, वामत्रिभुजेषु धनुःपाश[3]परशवः, विचित्रालङ्कारधरां रूपयौवनशृङ्गारवतीं वैरोचनकिरीट[4]युक्तां पद्मचन्द्रासनप्रभाम्।

॥ इत्यार्य्यमहासाहस्रप्रमर्द्दनीसाधनम् ॥

———

[1] N °सन°।
[2] B कुर्व्वते।
[3] Ba °सपाश°।
[4] ANBBa °टि°

199.

[1]महामन्त्रानुसारिणी चतुर्भुजैकमुखी कृष्णा दक्षिण-भुजद्वये वज्रवरदवती वामभुजद्वये परशुपाशवती हुँकार-बीजा अक्षोभ्यकिरीटिनी सूर्य्यासनप्रभा चेति[2]।

॥ इत्यार्य्यमहामन्त्रानुसारिणीसाधनम् ॥

---

200.

महा[3]सितवती चतुर्भुजैकमुखी रक्ता दक्षिणभुजद्वये अक्षसूत्रवरदवती [4]वामभुजद्वये वज्राङ्कुशहृत्प्रदेशस्थ-पुस्तकवती [5]जीँ बीजा अमिताभमुकुटी अर्द्धपर्य्यङ्कस्थिता नानालङ्कारवती सूर्य्यासनप्रभा चेति।

॥ इत्यार्य्यमहासितवतीसाधनम् ॥

---

201.

अथाम्नायान्तरेण पञ्चमहादे[6]वत्यो निर्द्दिश्यन्ते। तत्र महाप्रतिसरा पीता त्रिमुखी [7]प्रतिमुखं त्रिनयना दश-भुजा कृष्णसितदक्षिणेतरवदना दक्षिणपञ्चभुजेषु यथा-क्रमं खड्गवज्र[8]बाणवरदहृदयशायिहस्तस्थच्छत्राणि तथा

---

[1] B begins with नमः।
[2] ANC °वेति।
[3] BBa °शीत°।
[4] A omits वामभुज°... °लङ्कारवती
[5] NC त्रीँ°।
[6] A पञ्चदे°।
[7] AC पीत°।
[8] ACBa °पाश°।

वामपञ्चभुजेषु चापध्वजरत्नच्छटा[1] परशुशङ्खाः रत्नसम्भव-मुकुटी कृष्णकञ्चुकरक्तोत्तरीया अर्द्धपर्य्यङ्कललिताक्षेपा दिव्याभरणवस्त्रभूषिता चेति ।

महामायूरी हरिता द्विभुजैक[2] मुखी दिव्या मयूरपिच्छ-वरदक्षिणवामभुजा चेति ।

महासाहस्रप्रमर्द्दनी पूर्व्ववदेव ।

महामन्त्रानुसारिणी चतुर्भुजैकमुखी कृष्णा दक्षिण-भुजयोरसिवरदौ वामभुजयोः परशुपाशौ चेति ।

महासित[3]वती चतुर्भुजैकमुखी रक्ता दक्षिणभुजयो-रसिवरदौ वामभुजयोः परशुपाशाविति ।

त्र्यक्षराङ्किताः स्वबीजमध्याः स्वनामसहिता अमूषां मन्त्राः ।

॥ [4]महापञ्चरक्षासाधनम् ॥

---

## 202.

महाप्रत्यङ्गिरा कृष्णा षड्भुजैकमुखा खड्गाङ्कुशवरद-दक्षिणहस्ता रक्तपद्मत्रिशूलहृदयस्थसपाशतर्ज्जनीयुक्तवाम-हस्ता हुँबीजा अक्षोभ्यमुकुटा सर्व्वालङ्कारवती रूप-यौवनसम्पन्ना ।

॥ [4]इति महाप्रत्यङ्गिरासाधनम् ॥

---

[1] A ०च्छत्रा० ।
[2] B ०मुखदिव्या ।
[3] Ba ०शीत० ।
[4] This Colophon is found in Nb only.

203.

ध्वजाग्रकेयूरा कृष्णा त्रिमुखी चतुर्भुजा रक्तश्याम-दक्षिणवाममुखी खड्गपाशधारिदक्षिणकरद्वया वज्राङ्कित-खट्वाङ्ग[1]चक्रवामहस्तद्वया ऊर्द्ध्वपिङ्गलकेशी शुष्कपञ्च-मुण्डालङ्कृतशिरस्का व्याघ्राजिनवसना दंष्ट्राकरालमुखी प्रलम्बोदरी प्रत्यालीढपदा सूर्य्यासनप्रभा पीतवस्त्र-कञ्चुकिनी हुँबीजा अक्षोभ्यमुकुटा ।

॥ [2]इति ध्वजाग्रकेयूरासाधनम् ॥

204.

अपराजिता पीता द्विभुजैकमुखी नानारत्नोपशोभिता गणपतिसमाक्रान्ता चपेटदानाभिनयदक्षिणकरा गृहीत-पाशतर्ज्जनिकहृदयस्थितवामभुजा अतिभयङ्करकराल-रौद्रमुखी अशेषमारनिर्दलनी[3] ब्रह्मादिदुष्टरौद्रदेवता-परिकरोच्छ्रितच्छत्रा चेति ।

॥ [2]इति अपराजितासाधनम् ॥

205.

वज्रगान्धारी कृष्णा षण्मुखी द्वादशभुजा ऊर्द्ध्वपिङ्गल-केशी प्रत्यालीढपदा दंष्ट्राकरालवदना प्रतिमुखं त्रिनेत्रा[4] दक्षिणषड्भुजेषु [5]यथाक्रमं वज्रवज्रघण्टाखड्गत्रिशूलबाण-

---

[1] C omits ०चक्र० ।

[2] This Colophon is given in Nb only.

[3] ACN ०लनं ।

[4] Ba ०नयना ।

[5] Omitted in NCBBa.

चक्रा[1]णि, वामषड्भुजेषु खट्वाङ्गाङ्कुशधनुःपरशुपाश-हृत्तर्ज्जन्यः, प्रथममुखं कृष्णं अपराणि [2]मुखानि पञ्चवर्णानि विश्वपद्मसूर्य्यासना चेति। ॐ हुँ हुँ हुँ[3] स्वाहेति जापमन्त्रः[4]।

अत्रैव भवति धारिणी— नमो रत्नत्रयाय, नमश्चण्ड[5]-वज्रपाणये महायक्षसेनापतये, नमो भगवति महा-वज्रगान्धारि अनेकशतसहस्रप्रज्वलितदीप्ततेजायै उग्र-भीमभयानकायै योगिनीयै[6] भीष्मभगिनीयै[7] द्वादश-भुजायै विकीर्णकेशीयै अनेकरूपविविधवेशधारिणीयै, एह्येहि भगवति महावज्र[8]गान्धारि त्रयाणां रत्नानां सत्येन आकट आकट बलदेवादिकं ये चान्ये समये न तिष्ठन्ति तानावर्त्तयिष्यामि, [9]शीघ्रं गृह्ण गृह्ण गृह्ण[10] ॐ अल अल अल अल हुलु हुलु मुलु मुलु चुलु चुलु धम धम [11]रक्ष रक्ष [12]रक्षापय रक्षापय पूरय पूरय आविश आविश भगवति महावज्रगान्धारि सिद्धचण्ड-वज्रपाणिराज्ञापयति [13]ह्रौः हः हुँ फट् स्वाहा। अस्याः कर्म्मप्रसरोऽनेकविधः।

॥ [14]इति वज्रगान्धारीसाधनम् ॥

---

[1] A ०बालचक्रा० । [2] मुखानि only in Ba.
[3] ANCB omit.
[4] After this A again states the same *Sādhana*.
[5] AC ०न्द्र० । [6] Repeated in A.
[7] In Ba the terminations are in ०ये and not in ०यै ।
[8] Ba spells the name as ०गन्धा० । [9] Repeated in C.
[10] Ba omits. [11] C रङ्क २ ।
[12] C रङ्कापय २ । [13] N ह्रौः हः हहहह ऊँ. C ह्रौः हः ह हे ऊं ।
[14] This Colophon is given only in Nb.

## 206.

नम आर्य्यप्रतिसरायै।

प्रथमं तावन्मन्त्री मुखशौचादिकं कृत्वा मनोऽनुकूले स्थाने सुखासने उपविश्य ॐ आः हुँ रक्ष रक्ष हुँ फट् स्वाहेति स्थानात्मयोगेन[1] रक्षामधितिष्ठेत्। ततः स्वहृदि अकारजं चन्द्रमण्डलं तस्योपरि पँकाररश्मिनिर्गतान् गुरुबुद्धबोधिसत्त्वानवभास्य पुरतो दृष्ट्वा महाप्रतिसराप्रमुखान् सगणपरिवारान् पूजयेत्। पुष्पधूपदीपगन्धबलिनैवेद्यादीनि ढौकयित्वा पापं प्रतिदेशयेत्, त्रिरत्नशरणं गच्छेत्, बोधिचित्तमुत्पादयेत्, कुशलमूलं परिणाम्य क्षमापयेत्, ततश्चतुर्ब्रह्मविहारान् भावयेत्— तद्दुःखोद्धरणा करुणा सुखप्रतिष्ठापना मैत्री स्थिरसुखत्वेन मुदिता तथतारूपत्वोपेक्षा। ततः सर्व्वधर्म्मान् मनसाऽवलम्ब्य निर्व्विकल्पकं विचिन्त्य ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। ततो हुँकारेण विश्ववज्रमयीं भूमिं अधितिष्ठेत्[2]। तेनैव च वज्रेण वज्रपञ्जरं वज्रप्राकारं वज्रवितानं च विचिन्त्य तन्मध्ये सुँकारपरिणतं सुमेरुपर्व्वतं महामोक्षपुरभवनं नानाकुसुमाभिकीर्णम्, तस्योपरि हुँकारेण विश्ववज्रं पँकारपरिणतं विश्वपद्मं कर्णिकाकेशरान्वितम्, तस्योपरि चन्द्रमण्डलमध्ये पँकाररश्मिं संस्फार्य्य[3] तैः पञ्चज्ञानात्मकं आकृष्य सर्व्वतथागतैः सहैकीकृत्य द्रवीभूतबीजपरिणामेन वक्ष्यमाणवर्णाकृतिः महाप्रतिसरा गौरवर्णा द्विरष्टवर्षाकृतिः चैत्यालङ्कृतमूर्द्धा चन्द्रासनस्था सूर्य्यमण्डलालीढा वज्रपर्य्यङ्किनी त्रिनेत्रा अष्टभुजा चल-

---

[1] ANC °योगर°। [2] AC °तिष्ठते। [3] AC स्फार्य्य।

त्कुण्डलशोभिता हारनूपुरभूषिता कनककेयूरमण्डित-मेखला सर्व्वालङ्कारधारिणी, तस्या भगवत्याः प्रथममुखं गौरवर्णं दक्षिणं कृष्णं पृष्ठे पीतं वामे रक्तम्, दक्षिणप्रथमभुजे चक्रं द्वितीये वज्रं तृतीये शरं चतुर्थे खड्गं, वामप्रथमभुजे वज्रपाशं द्वितीये त्रिशूलं तृतीये धनुः चतुर्थे परशुं, बोधिवृक्षोपशोभिता नानापुष्पफलाद्यलङ्कृता ब्रह्माविष्णु-महेश्वरनन्दिकेश्वरादिभिः संस्तुता, देवनागयक्षगन्धर्व्वै-र्दक्षिणपार्श्वे सत्करणीया, इन्द्रयमवरुणवैश्रवणासुरगरुड-किन्नरमहोरगादिभिः देवैः स्तुता, रागद्वेषमोहवासनानु-सन्धिपाशच्छेदनकरी, परमन्त्रमुद्राविषकाखोर्दचूर्णप्रयोग-विद्वेषणाभि[1]चारकाणां च दुष्टचित्तानां विध्वंसनकरी, सर्व्वबुद्धबोधिसत्त्वार्य्यगणवरपूजाभिरतानां परिपालनकरी, महायानोद्ग्रहणलिखनपठनवाचन[2]स्वाध्ययनश्रवणधार-णाभियुक्तानां परिरक्षणकरी। एवंभूतां[3] भगवतीं स्फुरणसंहरणयोगेन सादरनिरन्तराभ्यासेनावलम्ब्य तस्या जापमन्त्रः— ॐ मणिधरि वज्रिणि महाप्रतिसरे हुँ हुँ फट् फट् स्वाहा।

तस्या महाप्रतिसरायाः पूर्व्वस्यां दिशि तथैव पूर्व्व-योगमधिकृत्य विश्वपद्ममध्ये हुँकारेण वज्र[4]चिह्नपरिणामेन महासाहसप्रमर्द्दनी कृष्णवर्णा पिङ्गलोर्द्धकेशा नर-कपालालङ्कृता भृकुटिदंष्ट्राकरालवदना स्फुरत्सूर्य्य-मण्डलासना ललिताक्षेपेण महाभूतमहायक्षानाक्रम-माणा कटककेयूरमण्डिता हारनूपुरभूषिता, तस्या दक्षिण-

---

[1] AC ०चारु० । [2] C omits ०स्वाध्यायन० ।
[3] Ba ०रूपां । [4] C बीज० ।

प्रथमभुजे वरदवज्रं द्वितीये अङ्कुशं तृतीये शरं चतुर्थे खड्गं वामप्रथमभुजे तर्ज्जनीपाशं द्वितीये परशुं तृतीये[1] धनुः चतुर्थे पद्मोपरि षोडशरत्नम्, तस्या मूलमुखं कृष्णं दक्षिणे श्वेतं पृष्ठे पीतं वामे हरितं सर्व्वं त्रिनेत्रम्, नानारत्नाद्यलङ्कृतशरीरा महाबलपराक्रमा रौद्रवेशा वटवृक्षोपशोभिता सप्तमात्रादिदेवतासन्त्रासनकरी रेवत्यादिग्रहाणां सन्त्रासितमनाः वासुक्याद्यष्टनागसन्त्रासनकरी वातपित्तश्लेष्मादिसंशोधनकरी रौद्रतमोऽन्धकारमेघस्फुटनकरी सर्व्वापमृत्युनिवारणकरी। तस्या जापमन्त्रः— ॐ अमृतवरे वरप्रवरविशुद्धे हुँ हुँ फट् [2]फट् स्वाहा ।

ततो महाप्रतिसराया दक्षिणदिग्भवने विश्वपद्मोपरि चन्द्रमण्डलमध्ये माँकारबीजपरिणामेन झटिति महामायूरी पीतवर्णा सूर्य्यमण्डलालीढा सत्त्वपर्य्यङ्किनी त्रिमुखा त्रिनेत्रा अष्टभुजा रत्नमुकुटिनी सर्व्वाभरणभूषिता तस्या दक्षिणप्रथमभुजे वरदं द्वितीये रत्नघटधरा तृतीये चक्रं चतुर्थे खड्गं वामप्रथमभुजे पात्रोपरि भिक्षां(क्षुः) द्वितीये मयूरपिच्छं तृतीये घण्टोपरि विश्ववज्रं चतुर्थे रत्नध्वजम्, ततो मूलमुखं पीतं दक्षिणे कृष्णं वामे रक्तम्, अशोकवृक्षोपशोभिता तत्पार्श्वे[3] स्थिता, ससप्तविषसञ्छादनकरी सरौद्रकपिलादिराक्षसीविध्वंसनकरी समस्तनागादीनां सन्त्रासनकरी देवनागयक्षगन्धर्व्वैर्नमस्करणीया ससप्तविंशनक्षत्रादिनवग्रहा[4]दिभिः सेवनीया सस्थावरजङ्गम-

---

[1] AC omits परशुः तृतीये ।

[2] The second फट् is omitted in AC.

[3] A स्थितसप्त० ;    [4] AC ०हान्नग्रहा० ।

[1]विषविमोचनीया सदेवदैत्यासुरसम्मोहनकरी। तस्या भगवत्या जापमन्त्रः— ॐ अमृतविलोकिनि गर्भसंरक्षणि आकर्षणि[2] हुँ हुँ फट् फट् स्वाहा।

तस्याः प्रतिसरायाः पश्चिमदिशि विश्वपद्मोपरि चन्द्रमण्डलमध्ये मँकारबीजपरिणामजां महामन्त्रानुसारिणीं भावयेत् शुक्लवर्णां द्वादशभुजां त्रिमुखां त्रिनेत्रां स्फुरत्सूर्य्यमण्डलालीढां रत्नमुकुटिनीं सर्व्वालङ्कारशोभितां नवयौवनोपेतां हारनूपुरकुण्डलालङ्कारां शिरीषद्वक्षोपशोभिताम्, तस्याः प्रथमभुजाभ्यां धर्म्मचक्रमुद्रा द्वितीयभुजाभ्यां समाधिमुद्रा तृतीये वरदः चतुर्थे अभयः पञ्चमे वज्रं षष्ठे शरः तृतीये तर्ज्जनीपाशः चतुर्थे धनुः पञ्चमे रत्नच्छटा[3] षष्ठे पद्माङ्कितकलशः[4], मूलमुखं शुक्लं दक्षिणे कृष्णं वामे रक्तम्, नानाकुसुमाभिकीर्णा साष्टलोकपालादिदेवैः संपूजनीया सचतुर्महाराजिकदेवसङ्घैः संस्तुता समालाविद्याधरैरर्च्चिता। तस्या जापमन्त्रः— ॐ विमले विपुले जयवरे अमृते विरजे हुँ हुँ फट् फट् स्वाहा।

ततो महाप्रतिसराया उत्तरस्यां दिशि विश्वपद्मोपरि चन्द्रमण्डलमध्ये चाँबीजपरिणामजा महासित[5]वती हरितवर्णा सूर्य्यमण्डलालीढा [6]त्रिमुखा त्रिनेत्रा षड्भुजा तथागतमुकुटिनी सर्व्वाभरणालङ्कृता दिव्यवस्त्रोपच्छादनी,

---

[1] ०विष० omitted in AC. [2] C ०णिये।

[3] A ०च्छ्रचा।

[4] All MSS (ACNa) read ०कमलः which is absurd. Here कलस is substituted as in images कलस is generally seen in one of the twelve hands of महामन्त्रानुसारिणी।

[5] AC ०शीत०। [6] AC omit.

तस्याः प्रथमभुजे अभयं द्वितीये वज्रं तृतीये शरं वाम-प्रथमभुजे तर्ज्जनीपाशं द्वितीये धनुः तृतीये रत्नध्वजम्, मूलमुखं हरितं दक्षिणे शुक्लं वामे रक्तम्, चम्पकवृक्षोपशोभिता सकामदेवादिप्रमुखैः सम्पूज्य स्तुता [1]सहारीत्यादि-यक्षयक्षिणीविध्वंसनकरी काकोलूकगृध्रश्येनकपोतादि-[2]विद्रावणकरी सभूतप्रेतपिशाचवेतालराक्षसादिसंमोहन-करी। अस्या जापमन्त्रः— ॐ भर भर सम्भर सम्भर इन्द्रियबलविशोधनि हुँ हुँ फट् फट् स्वाहा।

एवं यथानिर्द्दिष्टं मण्डलं विभाव्य तस्या रश्मिसमूह-व्याहतात् स्वस्वबीजात् रश्मीन् निश्चार्य्य ताश्च रश्मयः समस्तत्रैधातुकमभिव्याप्य तत्रैवाक्षरे प्रवेशयेत्। पुन-र्गगनकुहरे स्फारयित्वा ज्ञानचक्रमाकृष्य संस्तुत्य सञ्चार्य्य स्वसमयचक्रे प्रवेशयेत्। ततो द्वय[3]मेकलोलीभूतं विभाव्य तस्मात् रश्मिभिः सर्व्वतथागतानाकृष्य सम्पूज्य प्रार्थये-दभिषेकम्, सिच्यमानमात्मानं [च] पश्येत्। पूजास्तुत्य-मृतास्वादपूर्व्वकं भावयेत् विचक्षणः— चक्षुषोर्मोहवज्री महाप्रतिसरा, श्रोत्रयोर्द्वेषवज्री महासाहस्रप्रमर्द्दनी, घ्राणे मात्सर्य्यवज्री महामायूरी, [4]वक्त्रे रागवज्री महामन्त्रानु-सारिणी, स्पर्शे ईर्ष्यावज्री महासितवती। एवं रूपवेदना-संज्ञासंस्कारविज्ञानस्कन्धधात्वायतनस्वभावा एवं देवता-विशुद्धितो ज्ञातव्या विशेषतः। तत्रैव समयी भूत्वा मन्त्रं जपेदनेन विधिना। यान्येव मन्त्राक्षराण्युच्चार्य्यन्ते तानि देवतायोगेन साध्यनामविदर्भितेन शान्तमानसेन अवि-च्छिन्नं जपेत्।

---

[1] AC महा०। [2] AC विप्रा०। [3] A ०मेव। [4] AC च रक्ते।

ज्वरे गरे[1] तथा रोगे संग्रामे च तथैव च ।
डाकिनी[स]भूतोच्छुष्मनदीशत्रुप्रपीडिते ॥
अशनिविद्युन्मेघानां पर्व्वते वनमार्गयोः ।
तस्मान्मन्त्रं स्मरेन्नित्यं सर्व्वशङ्कानिसूदनम् ॥

तत्रैव क्रमः—

सर्व्वसत्त्वहितार्थाय सर्व्वसत्त्वहितोदयम् ।
येन केनचिदध्येष्यमायुषो वृद्धिहेतुतः ॥
पञ्चरक्षाविधानं च लिख्यते [2]स्वस्त्ययनं मया ।
सत्त्वानां च हितार्थाय वर्त्तयन् मण्डलं शुभम् ॥
शुचिभूम्यां शुभे रम्ये गोमयेनोप[3]लेपिते ।
वितानवितते चैव नानावस्त्रप्रलम्बिते ॥
समन्ताल्लिप्तगन्धेन चन्दनेन विशेषतः ।
विंशाष्ट(क)मङ्गुलिं कृत्वा मण्डलं वर्त्तयेत् ततः ॥
श्वेतेन [4]रक्तचूर्णेन शान्तिकर्म्म प्रशस्यते ।
पद्मस्याष्टदलं कुर्य्यात् कर्णिकाकेशरान्वितम् ॥
कलशान् पञ्च संस्थाप्य स्रग्दामवस्त्रशोभितम् ।
छत्रपताकासंयुक्तपल्लवेन तु छादितम् ॥
पुस्तकं धर्म्मधातुं च पटं चाग्रावलम्बितम् ।
पुष्पं धूपं च गन्धं च बलिनैवेद्यढौकितम् ॥
दूर्व्वाकुन्दसमायुक्तं शुक्लपुष्पं विशेषतः ।
दिग्विदिक्षु च देवानां पूजयेच्च यथाविधि ॥
गुडभक्तं शुक्लपुष्पं पायसं च विशेषतः ।
गन्धर्व्वाणां बलिं दत्त्वा पूर्व्वस्थाने तु स्थापयेत् ॥

[1] Nb घ्नरे ।
[2] A तस्यायनम्मया ।
[3] AC ०लेपयेत् ।
[4] A रज० ।

तिलकृष्णसुरापूर्णं मत्स्यमांसपलाण्डकैः ।
कुम्भाण्डानां बलिं दद्यात् दक्षिणे दिशि स्थापयेत् ॥
पायसं दधि क्षीरं च सर्ज्जनं च विशेषतः ।
पश्चिमायां दिशि स्थाप्य नागानां च महाबलिम् ॥
माषमुद्गकुल[1]त्थानां जाम्बुडीसीधुमेव च ।
उत्तरस्यां दिशि स्थाप्य यक्षाणां तु बलिं ददेत् ॥
ईशानीं दिशमारभ्य यावद् वा पथगोचरे ।
शुक्लरक्तं च [2]हरितं स्रग्दाम च प्रल[3]म्बितम् ॥
मध्यश्वेतं स्रग्दाम नानापुष्पविशेषतः ।
क्षीररुधिरशरावाणां [4]सर्ज्जरगन्धमेव च ॥
तत्तद्वस्तु[वि]शेषाणां अर्घं दत्त्वा यथार्थतः ।
[5]फलाफलं यथाप्राप्तं लड्डुमोदकशष्कुलि ॥
पिष्टकादि यथोक्तं च खण्डक्षीरविशेषतः ।
दक्षिणे बलिं संस्थाप्य अष्टचिह्नेन शोभितम् ॥

तथा च—

धर्म्मभाणक आचार्य्यः कर्म्मवज्री तथैव च ।
स्नानं कृत्वा शुचिर्वस्त्रं आसनं च शुचिर्मतम् ॥
पूर्व्वाभिमुखं तिष्ठयेत् पाठयेत् मौलिनं सदा ।
पिण्डपातिकभिक्षूणां शुचि शीलं प्रशस्यते ॥
आचार्य्याङ्गुलिमा कश्चित् पाठयेत् परिशुद्धितः ।
एकवारादिकारभ्यैकविंशादि प्रवर्त्तयेत् ॥

---

[1] ANb ०योनां ।
[2] AC पीतहरितञ्च ।
[3] AC ०ग्दामल० ।
[4] AC सज्जिर० ।
[5] A हलाहलि ।

न्यूनाधिकविधौ पाठे सम्यक्सिद्धिर्न जायते।
धैर्य्यवीर्य्येण सम्पन्नः करुणासत्त्वार्थमुद्यमात् ॥
तेन स्वस्त्ययनं कुर्य्यात् पूर्व्वबुद्धेन भाषितम्।
शुक्लभाजनभक्तानां आमिषं च विवर्ज्जयेत् ॥
सर्व्वं निरामिषं कृत्वा सर्व्वशास्त्रे तु सम्मतम्।
उत्तराभिमुखाचार्य्यः तत्र कर्म्म समारभेत् ॥
भावयेत् पूर्व्वमुद्दिष्टं देवतालम्बनं प्रति।
स्तुतिपूजासमायुक्तो घण्टावादनतत्परः ॥
नमोऽस्तु बुद्धाय अनन्तगोचरे
नमोऽस्तु ते सत्यप्रकाशके मुने।
सत्ये प्रतिष्ठाय प्रजाय मोचके
सर्व्वे च कामाः सफला भवन्तु ॥
नमस्ते पुरुषवीर नमस्ते तु तथागताः।
नमस्ते देवताः सर्व्वा धर्म्मधातो नमोऽस्तु ते ॥
दूर्व्वाकुन्दसमायुक्तं[1] साध्यनामविदर्भितम्।
अर्च्चयेद् देवतामूर्ध्नि धर्म्मधातुं तथैव च ॥
सकृदुच्चार्य्य मन्त्रेण[2] सकृद् यो[3]गेन अर्च्चयेत्।
अयुतेन तु कर्म्मेण आयुर्वर्द्धति सर्व्ववित् ॥
येन केनचिद्ध्येष्यं (तस्यां) मण्डलं च प्रवर्त्तयेत्।
[4]राज्यं राष्ट्रं तथा ग्रामं गोष्ठमुद्यानमेव च ॥
अमनुष्यावताररोगमडकदुर्भिक्षं नश्यति।
तेन कर्म्मेण रक्षन्ते शुष्कदारूण्यपि स्वयम् ॥

---

[1] A adds मन्त्रं after this.
[2] Repeated in A.
[3] AC ०ग्रेण।
[4] AC बाह्य०।

अचिन्त्यकर्म्मदुःखानि यदर्थं कर्त्तुमिच्छति ।
ततो रक्षाविधानेन रक्षा भवति निश्चितम् ॥
वातजाः पित्तजा रोगाः श्लेष्मजाः सन्निपातजाः ।
निहताः सर्व्वरोगाश्च स्वस्ति भवति सर्व्वदा ।
पाठस्वाध्याययोगेन निर्व्विघ्नो भवति निश्चितम् ॥

॥ पञ्चरक्षाविधानम् ॥

---

## 207.

नमो वज्रशृङ्खलायै ।

पूर्व्वोक्तविधानेन हृदि चन्द्रमण्डले हरितहुँकारज्ञाननिष्पन्नां वज्रशृङ्खलां त्रिमुखां षड्भुजां नीलशुक्लदक्षिणेतरमुखीं त्रिनेत्रां वज्रशृङ्खलशरवद्दक्षिणकरत्रयां तर्ज्जनीपाशचापवद्वामकरत्रयां हरितश्यामवर्णां ईषद्धसितमुखीं सर्व्वालङ्कारां दुष्टसत्त्वनिसूदनीमात्मानं ध्यात्वा मुद्रां बन्धयेत् । हस्तद्वयेन पृथक् पृथक् वज्रमुष्टिं कृत्वा कनीयसीं तर्ज्जनीं च शृङ्खलाकारेण बन्धयेत्[1] । ॐ वज्रशृङ्खले हुँ फट् स्वाहा इति जापमन्त्रः ।

॥ वज्रशृङ्खलासाधनम् ॥

---

[1] AC add ॐ वज्रशृङ्खलाकारेण चार्च्चयेत् ।

208.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं विश्वकमल-सूर्य्यस्थहरितश्यामहुँकारजां [1]हरितां त्रिमुखां अष्टभुजां प्रथममुखमीषद्धासरसं दक्षिणं कपिलं कपिललोचनं च वामं रक्तं भृकुटीदंष्ट्राकरालं दक्षिणेषु चतुःकरेषु अभय-वज्रशृङ्खलशरधरां वामचतुःकरै रुधिरपूर्णकपालतर्ज्जनी-पाशचापधरां ललिताक्षेपासनस्थां मार्ज्जारचर्म्मोत्तरीयां अमोघसिद्धिभूषितोर्द्ध्वपिङ्गलकेशां विचिन्त्य ॐ वज्रशृङ्खले हुँ फट् स्वाहेति मन्त्रं जपेत्।

॥ इति आम्नायान्तरेण वज्रशृङ्खलासाधनम् ॥

---

209.

आदौ तावन्मन्त्री सुखासनोपविष्टः शून्याः सर्व्वधर्म्मा इत्येवमुच्चा[2]र्य्य एवमाद्ये[3]भ्यः शून्या धर्म्माः प्रभवन्ती-त्येव दृष्टिसम्पत्तिमुत्पाद्य रत्नत्रयशरणादिगमनं कुर्य्यात्। ततो यावन्तः सत्त्वाः सत्त्वसंग्रहेण संगृहीताः, ते सर्व्वे मया सर्व्वज्ञज्ञाने प्रतिष्ठापयितव्या इति। ततो हृदये विश्वदल-कमलं तदुपरि सूर्य्यमण्डलं ततो हुँकारनिष्पन्नां वज्र[4]-शृङ्खलात्मिकां [5]सर्व्वबन्धच्छेदनीं दुष्टसत्त्वनिसूदनीं श्यामां त्रिमुखीं त्रिनेत्रां द्वितीयैकपिङ्गललोचनां वामे भृकुटी-मुखीं रक्तदंष्ट्राकरालां प्रथमे ईषद्धसिताननां अष्टभुजां प्रथमदक्षिणकरेणाभयददां द्वितीये वज्रं तृतीये वज्र-शृङ्खलां चतुर्थे शरं वामकरे रुधिरपूरितकपालं द्वितीये

---

[1] AC omit हरितां...०भुजां। [2] AC ०र्य्यैवेत्।
[3] AC ०मन्ये०। [4] A omits वज्र०। [5] AC सम्बन्ध०।

तर्ज्जनिकां तृतीये पाशं चतुर्थे धनुः, स्फुरन्तीं बुद्धमेघान् सुललितासनस्थां मार्ज्जारचर्म्मोत्तरीयां भावयेत् (ॐ) वज्रशृङ्खलाम्। क्षणेन प्राप्यते बोधिः किं पुनरन्याः सिद्धयः। ॐ वज्रशृङ्खले हुँ फट् स्वाहा।

॥ वज्रशृङ्खलासाधनोपायिका समाप्ता ॥

---

## 210.

नमो ध्वजाग्रकेयूरायै।

नत्वा ध्वजाग्रकेयूरां सर्व्वापायभयापहाम्।
तस्याः साधनसंसिद्धिर्लिख्यते श्रद्धया मया॥

आदौ तावन्मन्त्री मुखशौचादिकं कृत्वा मनोऽनुकूले [1]प्रदेशे सुखासनोपविष्टः—

सन्मैत्र्यादिमनःशुद्धो दानपारमितापरः।
भावयेन्मारविध्वंसकारिणीं [2]तारिणीं रणे॥

ॐ चन्द्रार्कविमले स्वाहेति मन्त्रमुच्चार्य्य स्वहृदि अ[3]काराकारपरिणतचन्द्रसूर्य्यसम्पुटोपरि ध्वँकारपीतरश्मिभिराकाशदेशे बुद्धबोधिसत्त्वान् दृष्ट्वा मनोमयपुष्पादिभिः सम्पूज्य त्रिशरणगाथां पठेत्। तदनन्तरं ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति मन्त्रमुच्चार्य्य मुहूर्त्तं शून्यतां भावयेत्। ततः ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमित्यहङ्कारमुत्पाद्य सत्त्वाद्युद्धरणाशयः प्रतिबिम्बसन्निभं चन्द्रसूर्य्यसम्पुटोपरि ध्वँकारपीतरश्मिभिरनन्तसत्त्वान् बुद्धबोधिसत्त्वरूपेणालङ्कृत्य तद्धृदि प्रविश्य पुनरा-

---

[1] N देशे।　　[2] AC omit.

[3] AC ०कारपरि०।

गत्य रश्मिसमूहं बीजे प्रविशन्तं भावयेत्। तत् सर्व्वं परिणम्य संग्रामतारिणीं देवीं पीतवर्णां मनोरमां चतुर्वक्त्रभुजां क्रुद्धां प्रत्यालीढां लम्बोदरीं शुभां रक्तवर्त्तुलत्रिनेत्रां सुनीलाम्बरधारिणीं असि[1]चक्रसव्यहस्तां वामाभ्यां तर्ज्जनीपाशकृष्णवज्राङ्कितश्वेतमूषलधरां वामाङ्गाश्लिष्टत्रिशूलां प्रथमं पीताननां वामे रक्तेतरसितां ऊर्द्धविकृतधूमाभां रक्तपिङ्गोर्द्धजटाबद्धां कपालपञ्चशोभनां पद्मसूर्य्यमध्यस्थां आत्मानं भावयेत् स्थिरम्। एवं समयसत्त्वं निष्पाद्य सूर्य्यस्थहृद्बीजरश्मिना ज्ञानसत्त्वमानीय सम्पूज्य जः हुँ वँ होः एभिरक्षरैराकृष्य प्रवेश्य बद्धा वशं नयेत्। ततस्तथागतान् याचयेत्— अभिषिञ्चन्तु मां सर्व्वतथागताः। ततोऽक्षोभ्यादिभिः तथागतैः स्वहृदयात् विस्फारितपञ्चामृतपरिपूरित[2]कनककलशहस्तैरभिषिच्यमानमात्मानं भावयेत्। तत्रेयं अभिषेकगाथा—

अभिषेकं महावज्रं त्रैधातुकनमस्कृतम्।
ददामि सर्व्वबुद्धानां त्रिगुह्यालयसम्भवम्॥

ॐ सर्व्वतथागताभिषेकसमयश्रिये आः हुँ स्वाहा। ततः परिशिष्टपानीयं परिणम्य मुकुटे अक्षोभ्यो जायते।

मन्त्रमावर्त्तयेन्नित्यं सत्यवादी दयापरः।

ॐ भगवति ध्वजाग्रकेयूरे परसैन्यविध्वंसनकरि स्वसैन्यपरिपालनि ऊर्णामुखि ख ख खाहि खाहि परसैन्यं अनन्तमुखेन अनन्तभुजेन प्रहर प्रहर हुँ हुँ फट् फट् स्वाहा— हृदयमन्त्रः। ॐ सर्व्वग्रहनक्षत्रचामीकरणि

---

[1] A असित०।  [2] N ०परित०।

स्वाहा— उपहृदयमन्त्रः । मालामन्त्रस्तु धारण्यां द्रष्टव्यः ।
उत्थानकाले—

कृतो वः सर्व्वसत्त्वार्थः सिद्धिर्दत्ता यथानुगा ।
गच्छध्वं बुद्धविषयं पुनरागमनाय मुः ॥

इत्यनेन मन्त्रेण विसर्ज्जयित्वा विहरेत् ।

॥ इति ध्वजाग्रकेयूरासाधनं समाप्तम् ।

। कृतिरियं पण्डितमध्यमकरुचेर्द्धर्म्माकरमतेः ॥

---

## 211.

नम आर्य्योष्णीषविजयायै ।

प्रथमं तावन्मन्त्री मुखशौचादिकं कृत्वा सुखासनोपविष्टः चतुर्ब्रह्मविहारान् भावयेत्। तदनन्तरं स्वहृद्यकारपरिणतं चन्द्रमण्डलं ध्यात्वा तदुपरि सितभ्रुँकारं दृष्ट्वा तद्विनिर्गतरश्मिसमूहैर्जगदवभास्य पुरतः सर्व्वबुद्धबोधिसत्त्वान् विचिन्त्य पूजापापदेशनादिकं कुर्य्यात्। ततः ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। ततः पुनरपि स्वहृदीन्दौ पँकारजं विश्वदलकमलं ध्यात्वा तदुपरि चन्द्रबिम्बमध्यशंसितभ्रुँकारं दृष्ट्वा तत्परिणतां उष्णीषविजयां चैत्यगुहान्तःस्थां सितवर्णां त्रिमुखां त्रिनेत्रां अष्टभुजां सर्व्वालङ्कारभूषितां विश्व[1]दलकमलचन्द्रस्थां बद्धवज्रपर्य्यङ्कां प्रथमसितवदनां दक्षिणे पीतमुखां वामे नीलमुखां दंष्ट्रापुटावष्टब्धौष्ठां दक्षिणचतुर्भुजेषु विश्ववज्ररक्तारविन्दस्थअमिताभजिनशरवरदहस्तां वामचतुर्भुजेषु

---

[1] A विश्वक० ।

धनुःतर्ज्जनीपाशअभयभद्रघटहस्तां वैरोचनमुकुटिनीं दिव्यवसनपरिधानोत्तरीयां[1] सितप्रभामालिनीं पश्येत्।

तस्या दक्षिणे लोकेश्वरो वामे पद्मधारी दक्षिणे चामरहस्तः, वामे वज्रपाणिः कुवलयदलश्यामः वामे कुवलयस्थवज्रधारी दक्षिणे चामरहस्तः। एतौ निषण्णौ चिन्तनीयौ। ततः पूर्व्वदक्षिणपश्चिमोत्तरेषु अचलटक्कि[2]राजनीलदण्डमहाबलाः। सर्व्वे नीला द्विभुजा एकमुखाः त्रिनेत्राः प्रत्यालीढा व्याघ्रचर्म्माम्बरा ऊर्द्ध्वकेशा अष्टनागाभरणा विश्वदलकमलसूर्य्याक्रान्ता वामे तर्ज्जनीपाशहस्ता दक्षिणे खड्गअङ्कुशवज्रदण्डहस्ता भावनीयाः। उपरि शुद्धावासकायिकौ देवपुत्रौ चिन्तनीयौ पूर्णकुम्भभृतामृतं प्रवर्षमाणौ।

एवं सपरिवारां भगवतीं ध्यात्वा न्यासं कुर्य्यात्। ॐ शिरसि, आः कण्ठे, हुँकारं हृदये, त्राँ ललाटे, ह्रीः नाभौ, अं अः पादयोः। ततो मुद्रां बन्धयेत् सम्पुटाञ्जलिं कृत्वा तर्ज्जन्यौ सङ्कोच्य। ज्येष्ठाङ्गुष्ठाभ्यां साधुकारं दत्त्वा ॐकारत्रयसहितां धारणीमेकवारमावर्त्त्य पश्चात् विना मुद्रया आवर्त्तयेत्। ॐ भ्रुँ स्वाहा—हृदयमन्त्रः। ॐ अमृतायुर्ददे स्वाहा—उपहृदयामन्त्रः। ॐ अमिते अमितोद्भवे अमितविक्रान्ते अमितगात्रे अमितगामिनि अमितायुर्ददे गगनकीर्त्तिकरि सर्व्वक्लेशक्षयंकरीये स्वाहा—इति मालामन्त्रः।

॥ आर्य्योष्णीषविजयासाधनं समाप्तम् ॥

---

[1] A adds नानालङ्कारभूषितां after this. [2] N ढक्कि०।

212.

प्रणम्य पद्मं जगन्नाथं ध्यानासक्तजगत्प्रियम्।
उष्णीषाराधनं वक्ष्ये स्वस्मर[1]णाय साधनम्॥
क्वचिद् देशे विहारे वा भूधरादौ मनोरमे।
सुकुमारासनासीनो योगी चित्ते विचिन्तयेत्॥
सत्त्वानां शङ्करं तत्र सभ्रूँकारं स्फुरत्प्रभम्।
बुद्धान् तस्यावभासेन पूजयेत् व्यध्ववर्त्तिनः॥
सम्पूज्य पुरतस्तेषां पापं कायादिकर्म्मजम्।
कृतादिभेदसञ्जातं देशयेदुपदेशवित्॥
अनुमोद्यं शुभं सर्व्वं तत्प्रसूतं विशोधयेत्।
त्रिरत्नशरणं गच्छेत् [2]सप्रपञ्चं यथाक्रमम्॥
उपदेशं दृढीकृत्य यावदाबोधिसाधनम्।
आलम्ब्य कृपया सत्त्वान् बोधिचित्तं विभावयेत्॥
निर्म्मितं च निरालम्बं निःस्वभावं खधातुवत्।
तत्राकारोद्भवाम्भोजस्थिते शीतांशुमण्डले॥
देवीं तद्बीजसम्भूतां त्रिमुखीं च त्रिलोचनाम्।
नवयौवनसम्पन्नां शृङ्गारादिरसास्पदाम्॥
सर्व्वबुद्धगुणाकीर्णां सर्व्वालङ्कारभूषिताम्।
प्रभालीरुद्ध[3]सर्व्वाशां शरद्गगनसन्निभाम्॥
जाम्बूनदप्रभाकारां शान्तसव्याननोज्ज्वलाम्।
प्रलयाम्भोधरोद्भासिभीमतीव्रतराननाम्॥

---

[1] AC ०स्फार०। [2] ANa सप्त०।
[3] A ०लीबुद्ध०. Na ०लिर्बुद्ध०।

विश्वहृदयसंसक्त[1]कुलिशं सव्यपाणिना ।
द्वितीयेनाम्बुजासीनं बुद्धमन्येन मार्गणम् ॥
वरदानं चतुर्थेन वामेनापि यथाक्रमम् ।
तर्जनीनिहितं पाशं चापं चापि तथाभयम् ॥
दधानां पूर्णकुम्भं च ध्यायात् चैत्यगुहालयाम् ।
सबीजं चिन्तयेत् पद्मं तद्धृदिस्थमनुत्तरम् ॥
तस्य शुक्लप्रभाजालचोदनाशीलितं नभः ।
बुद्धमेघैर्महाव्यूहैर्बोधिसत्त्वैः समन्ततः ॥
महाकृपात्मकास्तेऽपि [2]मन्त्रेण ह्यध्ववर्त्तिनः ।
चिन्तनीयाः प्रयत्नेन सदा सेकप्रदायिनः ॥
चैत्यान्तर्गतमोँकारं चामाकारं प्रभास्वरम् ।
हुँ ह्रीः अं अः इत्येतद् बीजजातं यथाक्रमम् ॥
शिखाललाटकण्ठस्थं हृन्नाभिचरणस्थितम् ।
चन्द्रमण्डल[3]मध्यस्थं ध्यायात् योगी महेश्वरम् ॥
शरदिन्दुप्रभाकारौ स्फुरद्रश्मिमालिनौ ।
कमलवज्रसम्भूतौ सव्ये चामरधारिणौ ॥
पद्मवज्रधरौ तस्याः पार्श्वयोः सव्यवामयोः ।
केकरं पुरतोऽत्युग्रं टक्किराजं च दक्षिणे ॥
नीलदण्डं तु पृष्ठस्थं वामे महाबलं न्यसेत् ।
कृपाणाङ्कुशसद्वज्रदण्डसम्भूतपाणयः ॥
सद्विद्युद्वज्रसम्पातप्रलयाम्भोदनिःस्वनाः ।
ग्रीष्मार्कनयनालोक[4]दुष्टप्राणहरा अमी ॥

---

[1] Na ०सर्गी ।
[2] AC सन्तानास्त्य० ।
[3] AC ०मध्ये या ।
[4] AC ०द्रष्टु ।

सव्ये[1] तर्ज्जनिकापाशैरवसव्यकरोद्यताः ।
ज्वालामालाकुला ध्येया विश्वपद्मार्कमण्डले ॥
इत्थमहर्निशं मन्त्री भावयेद् यस्तु योगवित् ।
स प्राप्नोत्यचिराद् बोधिं वज्रयानप्रवर्त्तनीम् ॥

॥ इत्युष्णीषविजयासाधनम् ॥

---

213.

वसुधारायै नमः ।

पूर्व्ववच्छून्यतापर्य्यन्तं[2] विभाव्य झटिति जम्भलरूपमात्मानं ध्यात्वा स्वहृदये चन्द्रमण्डलमध्ये वँकारबीजनिर्जातां वसुधारां भगवतीं [3]ध्यायात् कनकवर्णां सकलालङ्कारवतीं द्विरष्टवर्षाकृतिं दक्षिणकरेण वरदां[4] वामकरेण धान्यमञ्जरीधरामक्षोभ्यधारिणीम् । पुरतो भगवतीं श्रीवसुन्धरां दक्षिणतो वसुश्रियं पश्चिमतः श्रीवसुमुखीं वामतो वसुमतिश्रियम् । एताश्चाद्याक्षरबीजाः स्वनायिकासमानरूपाश्चिन्तनीयाः । एवं विभाव्य मन्त्रमावर्त्तयेत्— ॐ वसुधारिणि स्वाहा, ॐ[5] वसु स्वाहा, ॐ वसुश्रिये स्वाहा, ॐ वसुमुखि स्वाहा, ॐ वसुमतिश्रिये स्वाहा । प्रत्यहं गोमयेन द्विहस्तप्रमाणं चतुरस्रं मण्डलकं कृत्वा त्रिसन्ध्यं सुगन्धिकुसुमैरभ्यर्च्य सहस्र-

---

[1] AC सर्व्वे ।
[2] C ०नन्तरं ।
[3] N ध्यात्वा ।
[4] A has वामकरेण वरदां again.
[5] ANC add श्री० ।

चतुष्टयं जपतां षण्मासात् मनोरथं परिपूरयति[1]। यथालब्धकुसुमानां चतुर्लक्षमाहुतिं [2]कृत्वा महती श्रीर्भवति।

॥ इति वसुधारासाधनम् ॥

---

## 214.

अथ वसुधारां भावयितुमिच्छति, तदा सर्व्वमेव पूर्व्ववत् किन्तु षष्ठस्य तृतीयकं बीजं अर्द्धेन्दुबिन्दुभूषितं तेनैव निष्पन्नां वसुधारां पीतवर्णां[3] धान्यमञ्जरीनानारत्नवर्षमाणघटवामहस्तां दक्षिणेन वरदां सर्व्वालङ्कारभूषितां सखीजनपरिवृतां भावयेत् अहमेव वसुधारेति। हस्तद्वयेन मुष्टिं बद्धा मध्यमातृतीयपर्व्वभग्ना वसुधारामुद्रेयम्। ततो जापं कुर्य्यात्—ॐ श्रीवसुनिधानक्षेत्रे स्वाहा। [4]पट्टगतां भगवतीं अवतार्य्य महतीं पूजां कृत्वा भावयेत् स्वपेच्च। ततः सिद्धा भवति [5]भगवती।

॥ वसुधारासाधनम्।

---

## 215.

पूर्व्वोक्तविधानेन पीतवँकारपरिणतां द्विभुजैकमुखीं पीतां नवयौवनाभरणवस्त्रविभूषितां धान्यमञ्जरीनानारत्नवर्षघटवामहस्तां दक्षिणेन वरदां अनेकसखीजनपरिवृतां विश्वपद्मचन्द्रासनस्थां रत्नसम्भवमुकुटिनीं स्वबीज-

---

[1] B पूर०। [2] N कृत्वा।

[3] AN read वामे after this.

[4] B omits पट्टगतां...भगवती। [5] A omits.

हृदयां झटिति निष्पाद्य मुद्रां बन्धयेत् । हस्तद्वयेन मुष्टिं कृत्वा मध्यमा तृतीयपर्व्वभग्ना— वसुधारामुद्रा । ततः ॐ वसुधारा रत्ननिधानकोषे स्वाहा इति मन्त्रं जपेत् ।

॥ वसुधारासाधनम् ॥

---

216.

वसुधारायाः पटस्य प्रतिमाया वा अग्रतश्चन्दनेन चतुरस्रं मण्डलकं कृत्वा तत्र भगवतीं मनसाऽऽरोप्य पूजयित्वा चन्दनालिप्तपाणिः वसुधारा[1]धारणीपुस्तक[2]सूत्रावबद्धकुसुममालां पुरतः स्थापितोदकभाजनेन निक्षिप्य सर्व्वसत्त्वेषु महामैत्रीचित्तमालम्ब्याभिमतसिद्धौ हृदयमाधाय वसुधाराधारणीं पठेत् । पठंश्च [3]स्वाहान्वितमन्त्राणां स्वाहाशब्दमुच्चारयन् सितपुष्पदूर्व्वासहिताक्षत[4]तण्डुलान्युदकभाजने दद्यात् षण्मासं यावत् । पाठावसाने च शुचिप्रदेशे तदुदकं विसर्ज्जयेदिति ।

॥ वसुधाराधारण्युपदेशः ॥

---

[1] AN धारि० । [2] AC ०सूत्रावद्ध० ।
[3] B स्वाहोच्चरित० । [4] ANC ०ताखण्ड० ।

## 217.

नमो वज्रवाराह्यै।

प्रातरुत्थाय योगी मुखशौचादिकं कृत्वा समय[1]गुलिकां मुखे प्रक्षिप्य गिरिगह्वरादिमनोरमे स्थाने विश्ववज्रासनासीन आलिकालिं वारत्रयमुच्चार्य्य अहं वज्रवाराही भूत्वा तदाकारं जगत् सर्व्वं करिष्यामीति कृतनिश्चयः स्वहृ[2]दब्जस्थं रक्तवंकारं पश्येत्। तदीयरक्तरश्मिभिः प्रलयानलदुःसहैरकनिष्ठभुवनवर्त्तिनीं वज्रवाराहीं वक्ष्यमाणभुजायुधां गुरुबुद्धबोधिसत्त्वांश्चानीयाकाशे पुरतः संस्थाप्य हृद्रश्मिविनिर्गतपूजाभिः सम्पूज्य च तदग्रतः पापदेशना[3]पुण्यानुमोदना[4]पुण्यपरिणामनात्रिशरणगमनबोधिचित्तोत्पादादिकं कृत्वा चतुर्ब्रह्मविहारान् विभाव्य[5] ततः ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति मन्त्रार्थमामुखीकुर्व्वन् मुहूर्त्तमप्रतिष्ठरूपेण तिष्ठेत् पूर्व्वप्रणिधानवशात्। समाधेर्व्युत्थाय आकाशे यँरँवँ[6]लँपरिणतानि धनुस्त्रिकोणवर्त्तुलचतुरस्राणि हरिन्नीलरक्तश्वेतानि चतुर्म्महाभूतमण्डलानि उपर्य्युपरि पश्येत्। तदुपरि सुँकारसम्भवं सुमेरुं चतुरस्रं च चतूरत्नमयं अष्टशृङ्गोपशोभितं विचिन्त्य तदुपरि ॐ मेदिनी वज्रीभव वज्रबन्ध हुँ, ॐ वज्रप्राकार हुँ वँ हुँ, ॐ वज्रपञ्जर हुँ पँ हुँ, ॐ वज्रवितान हुँ खँ हुँ, ॐ वज्रशरजाल त्राँ शँ त्राँ, ॐ वज्र[7]ज्वालानलार्क

---

[1] ANC गुडि०। [2] A ०दब्जापूर्य्यं।

[3] Ab adds अकरणसम्वर।

[4] AC omit पुण्यपरिणामना।

[5] N adds तथा शून्यताज्ञानवज्रस्वभावाः सर्व्वधर्म्माः।

[6] A ०लँ०। [7] Ab ०ज्वालाकरालार्क।

हुँ हुँ हुँ—एतैर्म्मन्त्रैर्वज्रभूम्यादिषट्कं विधाय तदभ्यन्तरे चतुरस्रादिसर्व्वलक्षणसंयुक्तं कूटा[1]गारं विचिन्त्य तन्मध्ये रक्तपँकारजमष्टदलपद्मं तद्वरटके आलिकालिपरिणतचन्द्र-सूर्य्यसम्पुटमध्ये रक्तवज्रान्तर्गतं रक्तवँकारं प्रकृतिप्रभास्वरं पश्येत् । एतत्सर्व्वपरिणामेनात्मानं भगवतीं वज्र-वाराहीं दाडिमकुसुमप्रख्यां द्विभुजां [2]दक्षिणेन वज्र-तर्ज्जनिकाकरां वामेन करोटकखट्वाङ्गधरां एकाननां त्रिनेत्रां मुक्त[3]केशां षण्मुद्रामुद्रितां दिगम्बरां पञ्चज्ञाना-त्मिकां सहजानन्दस्वभावां प्रत्यालीढपदाक्रान्तभैरवकाल-रात्रिकां [4]सार्द्रमुण्डमालालङ्कृतगात्रां स्रवद्रुधिरं पिबन्तीं भावयेत् ।

तथा पूर्व्वादिचतुर्द्दलेषु यथाक्रमं वामावर्त्तेन डाकिनी-लामाखण्डरोहारूपिणीः कृष्णश्यामरक्तगौराः ; एता एकवक्त्राः चतुर्भुजा वामे कपालखट्वाङ्गकपालहस्ताः दक्षिणे डमरुकर्त्रिकाः त्रिनेत्रा मुक्तकेशा नग्ना आलीढासन-संस्थिताः पञ्चमुद्राविभूषिता भावयेत् । विदिग्दलेषु चत्वारि बोधिचित्तादिपूर्णानि कपालानि विचिन्तयेत् ।

तदनु भगवतीहृद्बीजविनिर्गतरश्मिभिर्जःकारेण ज्ञान-चक्रमानीय हुँकारेण स्वसमयचक्रजले जल[5]मिव प्रवेश्य वँकारेण बन्धनं होःकारेण तोषणं कुर्य्यात् । ततः भ्रुँहुँखँ-आः[6]डाँडँकारेणायतनानि बोधयेत् । [7]षड्देवतीशुद्धै-

[1] A ०टाङ्गा० ।
[2] Ab reads दक्षिणेन...०खट्वाङ्गधरां after सहजानन्दस्वभावां ।
[3] A ०मुकुट० ।
[4] ANC सार्द्ध० ।
[5] A ०बिम्बं ।
[6] Ab होँ हँ, C हाँ हँ, A हाँ ऊँ ।
[7] A यद्द० ।

मन्त्रपदैर्भगवतीं कवचयेत्। ॐ वँ[1] नाभौ, हाँ [2]याँ हृदि, ह्रीँ मोँ वक्त्रे, ह्रेँ ह्रीँ मूर्द्धि, हुँ हुँ शिखायां, फट् फट् सर्व्वाङ्गेष्वस्त्रम्। ततो भगवतीकायवाक्चित्तपथेषु ॐ आः हुँ इत्यर्पयेत्। ध्यानात् खिन्नो मन्त्रं जपेत्। तत्र मन्त्रः— ॐ वज्रवैरोचनीये हुँ हुँ फट् स्वाहा। त्रिसन्ध्यं बलिपूर्व्वकं भगवतीं भावयेत्। [3]भावयन् भगवतीरूपेण सर्व्वदा विहरेदिति।

॥ वज्रवाराहीसाधनं समाप्तम् ॥

॥ कृतिरियं महापण्डितावधूतश्रीमदद्वय-
वज्रपादानामिति ॥

---

218.

नमो वज्रवाराह्यै।

कुमतिदहनदक्षां ध्वस्तदौर्व्वाच्य[4]पक्षां
विषहतजनराशेर्हेलयोपात्तमोक्षाम्।
प्रशमसुखसमृद्धां वज्रवाराहिदेवीं
लिखति निचयमस्याः कोकदत्तो हि नत्वा॥

तत्रार्द्धयामावशेषायां रजन्यां[5] विधिनोत्थितः क्वचित् श्मशानादौ मनोऽनुकूले स्थाने सचन्दनाद्युपलिप्ते नाना-पुष्पप्रकरोपशोभिते साक्षात् शवासने वा यथासुखमुपविश्य मैत्र्यादिभावनापूर्व्वकं स्वहृदि [6]अँकारजसूर्य्यमण्डले

---

[1] C omits. [2] ANAb येँ [3] ANC विहरन्। [4] A ०दौर्व्वल्य०।
[5] A omits a considerable portion of the *Sādhana* and resumes again after धारयन्तीं in the middle of the *Dhyāna* (p. 428, l. 15). [6] N यँ०।

सित[1]ह्रीःकारज[2]रश्मिजालैः प्रकाशीकृत्य वज्रवाराही-प्रमुखगुरुयोगिनीबोधिसत्त्वतथागतान् यथास्थाने पुरः[3] संवीक्ष्य हृद्बीजनिर्गत-प्रचण्डा-चण्डाक्षी-प्रभावती-महा-नाशा - वीरमती - खर्व्वरी - लङ्केश्वरी - द्रुमच्छाया - चित्त-चक्राष्टाभिः; ऐरावती - महाभैरवा - वायुवेगा - सुराभक्षी - श्यामादेवी-सुभद्रा-हयकर्णा- खगानना - वाक्चक्राष्टाभिः; चक्रवेगा-खण्डरोहा-शौण्डिनी-चक्रवर्म्मिणी-सुवीरा-महा-बला - चक्रवर्त्तिनी - महावीर्य्या - कायचक्राष्टाभिः[4]; नील-रक्तसितवर्णाभिः अक्षोभ्यामिताभवैरोचनशिरोधराभिः, चन्द्रासनत्रिनेत्रपञ्चमुद्राधराभिः, वज्रपद्मचक्रकपालमाला-वबद्धत्रिशिखालङ्कृतशिरोभिः, कर्त्तिकपालखट्वाङ्गान्वित-पूजाव्यग्रकरपल्लवाभिः, [5]अर्घादिपुरःसरं पूजयित्वा वन्दना-पापदेशनाअकरणसंवरपुण्यानुमोदनात्रिशरणगमनबोधि-चित्तोत्पादमार्गाश्रयणआत्मभावनिर्य्यातनाअध्येषणाया-चना विधिवद् विधाय पुण्यं परिणाम्य शून्यताज्ञानप्रति-पत्तये शिरसि सम्पुटाञ्जलिं [6]कृत्वा गाथापाठपूर्व्वकं तथागतान् अध्येषयेत्। तत्रेयं गाथा— ॐ सर्व्वतथा-गताः शंसिताः सर्व्वसत्त्वानां सर्व्वसिद्धयः संपद्यन्तां सर्व्वतथागताश्चाधितिष्ठन्तु ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमिति। तदनन्तरं पूज्यपूजापूजकान् सर्व्वधर्म्मांश्च शून्यानिमित्ताप्रणिहिताकारेण स्वप्न-प्रत्ययवत् प्रत्यात्मवेद्यमधिमुञ्चन् हृन्मन्त्र[7]किरणजालै-

---

[1] N ध्रीः०।
[2] N adds ०ह्रीःकारज० again.
[3] BC पुनः।
[4] N adds देवीभिः after this.
[5] C अर्चा०।
[6] C बद्धा।
[7] B ०जालकिरणै०।

निराभासीकृत्य ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमित्य-
हङ्कारं कुर्य्यात्।

ततः स्वचित्तं रक्तपँकाररूपेण परिनिष्पन्नं तत् परिणम्य [1]रक्तपद्मोपरि अँकारजतरणिमण्डले सितहुँकारेण[2] सूर्य्यस्थह्रीःकाराधिष्ठितारुणपञ्चसूचिकवज्रं ध्यात्वा स्फुरणसंहरणपूर्व्वकं तत्परिणतां षोडशवर्षाकारां शरदिन्दुधवलां रक्तवर्त्तुलत्रिनेत्रां ईषद्दंष्ट्राकरालवदनां नानाकुसुमविराजितमुक्तकेशाङ्कबद्ध[3]विराजितां कृष्णवज्रावलीद्वयमध्यीकृतकपालमालाबद्धत्रिशिखां चक्रीकुण्डलकण्ठी[4]रुचकमेखलालङ्कृतां विलसत्त्रिपताकोज्ज्वलसव्यकरपल्लवस्थितपूर्व्वोक्तवज्रेण अज्ञानपुरुषस्य भयानुविधायिनीं अवसव्येन अध एकसू[चि]कोर्ध्वकृष्णपञ्चसू[चि]कसितदण्डानुगतशुष्कसार्द्रशिरोविश्ववज्रकनककलशमूलविनिर्गतरणत्सूक्ष्मघण्टिकान्वितविश्वपताकाविराजितबाहुदण्डासंसक्तखट्वाङ्गं चतुर्म्मारासृगापूर्ण[5] पद्मभाजनं धारयन्तीं क्षरद्रुधिरसार्द्रान्त्रग्रथितपञ्चाशच्छिरोमालाप्रलम्बिनीं रक्तपद्मोपरि सूर्य्यस्थाज्ञानपुरुषे आलीढपदस्थां विवस्त्रां प्रचण्डसूर्य्यप्रभां स्फुरद्रोममालिनीं प्रतिबिम्बसमां शृङ्गारादिरसोपेतां नानानिर्म्माणैर्दशदिक्षु जगदर्थपरां सूर्य्यस्थह्रीःकाराधिष्ठितसूर्य्यस्थवज्रहृदयां वज्रवाराहीमात्मानं ध्यायात्। ततो हृद्बीजरश्मिजालैः सर्व्वसत्त्वान् तद्रूपापन्नां निष्पाद्य आत्मनि प्रवेश्याहमेव भगवती वज्रवाराहीत्यहङ्कारं कुर्य्यात्।

---

[1] C reads रक्तपद्मो०...तत्परिणतां after ०कुसुमविराजित०।
[2] B adds ०सूर्य्यः after this.
[3] C ०वद्ध०।
[4] N ०कण्ठां।
[6] N ०समताजनं।

तदनु[1] स्वनाभौ विश्वपद्मारुणसूर्य्य[2]मण्डले सित-ह्रीःकारं दृष्ट्वा तन्मन्त्रमालामक्षसूत्राकारां सितां चक्र-भ्रमणयोगेन वदनविवरेण निश्चार्य्य बुद्धगुणगणमणिमन्त्रौ-षधिचन्द्रतारालिपिशास्त्रकलादिप्रभावमादाय नाभिविवरे प्रविशन्तीं स्वपरेषां सर्व्वाज्ञानदहनात्मिकां ध्यायात्। ततो हृद्बीजरश्मिसञ्चोदितगगनस्थां ज्ञान[3]देवीं पुरतो दृष्ट्वा पूर्व्वोक्तदेवीगणैरर्घ्यादिपुरःसरं पूजयित्वा [4]फेत्कार-मन्त्रपाठपूर्व्वकं ज्वालामुद्रां बद्ध्वा ललाटे वामावर्त्तेन भ्रामयन् तामावाहयेत्। तत्र एकलोलीभावान्मन्त्रा-हङ्कारं कुर्य्यात्। तत्रायं मन्त्रः— ॐ योगशुद्धाः सर्व्वधर्म्माः योगशुद्धोऽहम्। ततस्तद्धृद्बीजसञ्चोदितान् गगनस्थान् अक्षोभ्यादितथागतानानीय तैः पञ्चामृतभृतपञ्चतथा-गतात्मककलशैः तन्निर्म्मितनानातूर्य्यशङ्खमृदङ्गपणववीणा-वेणुगीतध्वनिभिः देवासुरैश्च जोजोत्कारपरायणैः कुङ्कुम-कर्पूरकस्तूरीसुगन्धिकुसुमप्रवर्षिभिः—

यथा हि जातमात्रेण स्नापिताः सर्व्वतथागताः।
तथाहं स्नापयिष्यामि शुद्धं तु दिव्येन वारिणा॥

गाथां पठन्तीभिरात्मानमभिषिच्य ॐ सर्व्वतथागता-भिषेक[5]समयश्रिये हुँ इत्यनेनाधिष्ठाय तां विश्वपद्म-सूर्य्यस्थाक्षोभ्याधिष्ठितशिरस्कां चिन्तयेत्। ततस्तन्निर्म्मित[6]-प्रचण्डादिदेवीभिः तन्निर्म्मितनानाविधपूजाभिः आत्मान-मभिपूज्य वक्ष्यमाणक्रमेणामृतास्वादं कृत्वा यावदिच्छं

[1] A तदत्र।
[2] A ०सुप्रभा०, C ०शुभ्र०।
[3] B ०स्थाज्ञान०।
[4] C हें०।
[5] A ०समश्रि०।
[6] AC omit ०प्रचण्डादिदेवीभिः तन्निर्म्मित०।

ध्यात्वा स्फुरणसंहरणपूर्व्वकं द्रुतादिदोषरहितं मन्त्रं जपेत्। तत्रायं मन्त्रः—ह्रीः। यदा उत्थातुकामः तदा मन्त्रमालां नाभिस्थह्रीःकारे अन्त[1]र्भाव्य पूजापुरःसरं प्रणिधानं विधाय पुण्यं परिणाम्य शताक्षरं च त्रिधोच्चार्य्य देव्यहङ्कारमुद्वहन् सर्व्वधर्म्मांश्च तद्रूपापन्नान् पश्यन् यथासुखं विहरेदिति।

तत्रायं शताक्षरमन्त्रः— (ॐ आः) ॐ वज्रसत्त्व समयमनुपालय वज्रसत्त्वत्वेनोपतिष्ठ दृढो मे भव सुतोष्यो मे भव सुपोष्यो मे भव अनुरक्तो मे भव सर्व्वसिद्धिं मे प्रयच्छ सर्व्वकर्म्मसु च मे चित्तं श्रेयः कुरु हुँ हहहह होः भगवन् सर्व्वतथागतवज्र मा मे मुञ्च वज्रीभव महासमयसत्त्व आः (हुँ) इति।

सन्ध्यान्तरेऽपि झटिति देव्याकारमभिमुखीकृत्य पूजादिपुरःसरं यावदिच्छं विभाव्य प्राग्वन्मन्त्रं जप्त्वा पूर्व्ववत् सर्व्वं कुर्य्यात्। अर्द्धरात्रसन्ध्यायां तु पूर्व्ववत् सर्व्वं कृत्वा शयनकाले शिरःस्थाने गुरुबुद्धबोधिसत्त्वान् दृष्ट्वा सम्पूज्य अष्टाङ्गपातप्रणामाशयेन सिंहशय्यायां [2]सुप्यात्। ततः प्रभातसन्ध्यायां देवीप्रबोधितः सन् पूर्व्ववत् सर्व्वं कुर्य्यादिति। यद्वा अनेन क्रमेण क्वचित् प्रदेशे शवपर्य्यङ्केन सुखासनोपविष्टः कृपयाऽवलम्ब्य सर्व्वसत्त्वान् पापदेशनामारभ्य यावद्बोधि[3]चित्तोत्पादपूर्व्वकं आःकारपरिणतायां स्वजिह्वायां पद्मदलाकारायां ह्रीःकारं ज्वलद्भासुरं यावदिच्छं विभाव्य स्थिरीकृत्य शतार्द्धगुलिकामालाक्षसूत्रेण

[1] AC ०रोऽन्त०। [2] AC सुप्येत्।

[3] AC यावदाबोधि०।

त्रिसन्ध्यं चतुःसन्ध्यं जपेत् योगी । [1]सुषुप्सुः पूर्व्वविधिना [2]सुप्यात् । एवं जपभावनात्मको विधिवत् लब्धानुज्ञो अष्टलोकधर्म्मनिर्म्मुक्तः आज्ञः समयसंवरस्थः कृपावान् कल्याणमित्राराधनतत्परो योगी [3]सप्तलक्षजापेन सर्व्व-शास्त्रकलाकलापेषु [4]अभिज्ञो भवति । मेधावी शूरो विशारदः [5]पर्षदनभिभवनीयो वादी च भवति । ज्वरगर-विषडाकिन्यादिभिरनुपद्रुतो भवति । यद् भक्षयति तदमृतं भवति । सिद्धे सति मन्त्रजापेऽस्मिन् एतन्मन्त्राभि-मन्त्रिता कठिनी यस्यैव हस्ते दीयते स मूर्खोऽपि कवि-र्भवति । तस्य गन्धमात्रेण पन्नगादयः सन्निहिता न भवन्ति । एभिरुपद्रवैरुपद्रुतानामन्येषामपि सर्व्वोपकार-समर्थो भवति । किं बहुनोक्तेन मयापि जडधिया शास्त्रे अकृतक्लेशेन विक्षिप्तचेतसा अस्य मन्त्रस्य लक्षद्वयजापेन इदं प्रज्ञालोकसाधनं कृतम् । [6]ये पुनः स्थिरचेतसः अनन्त-रोक्तगुणैर्युक्ता भवन्ति तेषां सुतरां सिद्धिः स्यादिति ।

॥ प्रज्ञालोकसाधनं[7] समाप्तम् ॥

---

[1] AC सुसुप्तः ।
[2] ANB स्वपेत् ।
[3] B अष्ट० ।
[4] AC चाभि० ।
[5] ANC परिषद० ।
[6] ANC येन ।
[7] ANC ०नविधिः ।

219.

सत्त्वान् वशीकृत्य चतुरार्य्यसत्येऽवतारणाय वश्यविधिरुच्यते। ततः पूर्व्वोक्तक्रमेण निष्पन्नां भगवतीं एवं रक्तबीजचिह्नपरिणामतो रक्तवर्णां विभाव्य सम्पूज्य स्तुतिं कुर्य्यात् अक्षोभ्यवज्रेत्यादिगाथाभिः। त्रितत्त्वनिर्य्यातोधोमुखकरोटत्रयोपरि रक्तआःकारज[1]वज्रपद्मभाण्डे दशसमयान् षोडशस्वरककारादिचतुस्त्रिंशद्व्यञ्जनैरधिष्ठि[2]तानधो यँरँपरिणतवाय्वग्निमण्डलाभ्यां ज्वालानलतापनं कृत्वा समयन्यस्तबीजरश्मिचोदिततथागतसमूहान् आनीय तत्रान्तर्भाव्य आद्यस्वरजात[3]चन्द्रोपरि हुँकारजचन्द्रस्थं तदधिष्ठितसितपञ्चसूचिकवज्रस्फुरितरश्मिजालैर्वज्रधरमपि चन्द्रवज्रस्य च प्रवेशात्, उ[4]त्पातकताविचिकित्सादिदोषापगते तदुपरि ॐकारं ध्यात्वा तत्किरणैस्तथागतानमृतरूपापन्नान् नानालोकधातुस्थामृतमपि तत्र प्रवेश्य प्रणवस्य च प्रवेशात्। यथावन्निष्पन्नममृतं दृष्ट्वा वारत्रयं त्रितत्त्वैरधिष्ठाय विधिवदमृतास्वादं कृत्वा यावदिच्छं विभाव्य स्वनामाक्षरपरिणतं साध्यं पुरोवर्त्तिनं दृष्ट्वा तन्मन्त्रमालानिर्गतरश्मिभिः तमानीय तत्रान्तर्भाव्य तस्य चित्त[5]मकारपरिणतं[6] आरक्तचन्द्रमण्डला[7]कारं ध्यात्वा तन्मन्त्रमालानिर्गतां देवीं रक्तवर्णां वामकरेण ह्रीःकारपाशधरां दक्षिणकरेण रक्तोत्पलकलिकानिभवज्राङ्कुशधरां

---

[1] ANC omits ०वज्र०।

[2] AC तान् दृष्ट्वा।

[3] B ०चन्द्रमण्डलो०।

[4] B ०त्पाकता०।

[5] B ०माकार०।

[6] AC ०णततया।

[7] AC ०मण्डा०।

साध्यपुरोवर्त्तिनीं[1] दृष्ट्वा ॐ आः ह्रीः अमुकस्य चित्तमाकर्षय हुँ जः इति तामाज्ञापयति योगी । ततः सा देवी विधिवत् प्रविश्य पाशेन संवेष्ट्याङ्कुशेन चोदयन्ती यथावदानीय स्वचित्ते प्रवेशयेत् । देवी तु मन्त्रमालान्तर्गता द्रष्टव्या । ततस्तं मुक्तशिखं विह्वलं विह्वलं गलं (?) रन्तुकामेच्छया एकान्तपरवशीभूतं कृतकरपुटाञ्जलिकं साधकाभिमुखं किं करोमीति [ब्रूते] ।

॥ वज्रवाराहीसाधनं समाप्तम् ॥

---

220.

दिगम्बरा मुक्तकेशी वज्रवाराही नाभिदेशे कर्त्रिकपालधारिणी नृत्यन्ती चिन्त्या । वश्यं भवतीति ।

॥ वज्रवाराह्या वश्यविधिः ॥

---

[1] C साध्यस्य ।

## 221.

ॐ नमो भगवत्यै आर्य्यवज्रवाराह्यै ।

अथातो भगवतीनां [1]गुह्येश्वरीणां सर्व्वदेवतीनां महाधियानां—

महान्तं च महागुह्यं महामायां महेश्वरीम् ।
त्रैलोक्यं संहर[2]त्येषा त्रैलोक्यं सृजते[3] पुनः ॥
गुह्य[4]कानामियं माता महामायेति विश्रुता ।
त्रैलोक्यत्रासनी विद्या [5]प्रपद्येयं महेश्वरी ॥
यया विज्ञातमात्रया विद्यया साधकेश्वरः ।
सदेवगन्धर्वगणान् सयक्षासुरमानुषान् ॥
विद्याधरपिशाचांश्च राक्षसो[6]रगकिन्नरान् ।
वशमानयति भूतानि जलजस्थलजानि च ॥
महाश्चर्य्यकरी विद्या इन्द्रजालकरी तथा ।
मोहनं स्तम्भनं चैव विद्वेषोच्चाटनादिकम् ॥
वश्याकर्षण[7]जम्भं चानेकविधकुतूहलम् ।
पठिता कुरुते विद्या वाचां सिद्धिं च साधके ॥
न जपं न व्रतं तस्य नोपवासो विधीयते ।
अक्लेशतो भवेत् सिद्धिर्देवि सत्यं वदाम्यहम् ॥
मन्त्रं तव महामाये सर्व्वत्रैलोक्यसाधिके ।
प्रवक्ष्यामि महायोगे दिव्यैरक्षरपङ्क्तिभिः ॥

ॐ नमो भगवति वज्रवाराहि आर्य्यापराजिते त्रैलोक्यमात्रे [8]महाविद्ये सर्व्वभूतभया[9]वहे महावज्रे वज्रा[10]-

---

[1] AC omit गुह्येश्वरीणां सर्व्वदेवतीनां ।
[2] A ०त्येका ।
[3] ACB सृज्यते ।
[4] ANC ०काममयं ।
[5] A प्रपस्येयं, NB प्रपदेयं ।
[6] AC ०नाग० ।
[7] ABC ०जम्भनं ।
[8] AC महावैद्य०, Ab विद्ये ।
[9] B ०पहे ।
[10] Ab वज्रासे ।

सने अजिते अपराजिते वश्यङ्करि [1]अभ्रभ्रामणि [2]विषशोधनि [3]क्रोधनि करालिनि सन्त्रासनि [4]मारणि सुप्रभेदनि[5] पराजये विजये जम्भनि स्तम्भनि मोहनि वज्रवाराहि महायोगिनि [6]कामेश्वरि खगे तद्यथा [7]प्रोतंगे प्रोतंगे हन हन प्राणान् किङ्किणि किङ्किणि [8]खेखिणि खेखिणि धुन धुन वज्रहस्ते शोषय शोषय [9]खट्वाङ्गकपालधारिणि [10]महापिशितमांसासनि मनुष्यान्त्रप्रावृते सार्द्रनरशिरोमालाग्रथितधारिणि सुम्भनिसुम्भे हन हन प्राणान् [11]सर्व्वपापसत्त्वानां [12]सर्व्वपशूनां [13]मांसच्छेदनि क्रोधमूर्त्ते दंष्ट्राकरालिनि महा[14]मुद्रे श्रीहेरुकदेवस्य अग्रमहिषि सहस्रशिरे सहस्रबाहवे शतसहस्रानने ज्वलिततेजसे ज्वालामुखि[15] पिङ्गललोचने वज्रशरीरे वज्रासने [16]मिलि [17]मिलि तिमिलि तिमिलि हे हे हुँ हुँ ख ख धु धु धुरु धुरु मुरु मुरु अद्वैते महायोगिनि पठितसिद्धे [18]द्रें [19]ध्रँ द्रें धँ धँ ग्रँ[20] ग्रँ हे हे ह ह भीमे हस हस वीरे हा हा हो हो हुँ हुँ त्रैलोक्यविनाशनि शतसहस्रकोटितथागतपरिवारिते हुँ[21] फट् सिंहरूपे खः गजरूपे गः त्रैलोक्योदरे महासमुद्र[22]मेखले ग्रस ग्रस हुँ हुँ फट् वीराद्वैते हुँ हुँ हा हा महा-

---

[1] ANCB नेत्र०। [2] AC विशोषणि, NAb विषशोषणि।
[3] Ab क्रोधक। [4] Ab मानिनि। [5] Ab ०दहरणि।
[6] Ab भामे०। [7] AB प्रोंगतंगे प्रोतंगे।
[8] AC खिंखि०। [9] Ab adds वच्च० before this.
[10] Ab ०मदार्पितसित०। [11] B सर्व्वापाय०।
[12] Omitted in Ab. [13] Ab महामांस०।
[14] Ab ०मद्रे। [15] AC ०सखि।
[16] Ab मिलितचिलिते करालिनि। [17] N चलि। [18] AC प्रें।
[19] Ab खँ। [20] Ab खँ। [21] Ab ऊँ ऊँ। [22] AC ०लेखने।

पशुमोहनि योगेश्वरि त्वं डाकिनि [1]सर्व्वलोकानां वन्दनि सद्यः प्रत्ययकारिणि हुँ फट् भूतत्रासनि महावीरे परम-सिद्धे [2]महाविद्येश्वरि हुँ हुँ फट् हुँ हुँ फट् स्वाहा[3]।

॥ ज्वालामुखीसाधनप्रयोगः[4] ॥

---

222.

एषा भगवती महामाया पठितसिद्धा। अस्याः साधनं भवति। सोमग्रहे सूर्य्यग्रहे वा ग्रहमपश्यन् एकविंशति-वारान् प्रवर्त्तयेत्। ततः सिद्धो भवति। यावदावर्त्तयति तावत् स्त्रीसहस्रैरनुगम्यते। सकृदुच्चारितेनाकर्षयति मारयति क्रुद्धचेतसा उच्चाटनविद्वेषणस्तम्भनं च कुरुते। इच्छावशात् कुसुमं सकृत् परिजप्याकाशे क्षिपेत् ब्रह्मा[5]दीनाकर्षयति। श्मशानाङ्गारं सकृज्जप्तं गृहे ग्रामे नगरे वा क्षिपेत्, दाहं दर्शयति, मयूरपिच्छकं सकृज्जप्तं आकाशे भ्रामयेत्, पुन-रुपशमयति। शर्करां सकृज्जप्तां चतुर्दिशं क्षिपेत्, चतु-रङ्गबलं दर्शयति। मयूरपिच्छकं विपरीतं भ्रामयेत्, प्रत्या-नयनं कृतं भवतीति।

॥ महामायाज्वालामुखीवज्रवाराहीप्रयोगसाधनम् ॥

---

[1] सर्व्वं० only in Ab. [2] महा० only in B.

[3] After the end of the mantra Ab repeats the portion beginning from ॐ नमो भगवति...कामेश्वरि खगे adding ॐ फट् at the end.

[4] This colophon is found only in Nb.

[5] ANC ०दीनादर्शयति।

## 223.

अधुना महामायायाः श्मशानान्युच्यन्ते । पूर्व्वादिदिग्भागे मण्डलस्य साधकानुग्रहं नाम श्मशानं उत्तरेणाद्वैतकरं पश्चिमे क्रोधाननं दक्षिणे घोरान्धकारं आग्नेय्यां महाप्रलयं नैरृत्यां महामेलापकयोगबहुलं वायव्ये सिंहनादमहा[1]फेत्कारं ऐशाने सरोजबीजं नाम श्मशानम् । एषु च यथायोगं दग्धार्द्धदग्धाङ्गखण्डिताङ्गार्द्धखण्डिताङ्गविभीषणाकारं भयङ्करं शूलभिन्नोर्द्धार्द्धशवाः पाटलकङ्केलिचूडाशिरीषौ[2]दुम्बरवटाश्वत्थनागकेशरपादपा यथाक्रमेण महिषमार्ज्जारभल्लुकव्याघ्राश्वगृध्रशूकरपिशाचमुखा महर्द्धिका यक्षाः समन्ततश्च[3] श्मशानाष्टके शृगालगृध्रोलूकवायसाश्च वेतालभूतादय इति ।

॥ महामायादेव्याः श्मशानम् ॥

---

## 224.

नमो वज्रवाराह्यै ।

ॐ [4]ह्रौँ घातय सर्व्वदुष्टान् हुँ फट् स्वाहा । बलिं दत्त्वा ध्यानं कुर्य्यात् । नाभिमध्ये रँभवं त्रिकोणमग्निमण्डलं तन्मध्ये चतुर्द्दलपद्मं रक्तवर्णं तदुपरि [5]ह्रौँकारं कल्पा[6]ग्निवद् देदीप्यमानं तत्परिणतमात्मानं वज्रवाराहीं रक्तवर्णां चतु[7]र्द्दलेषु पञ्चामृतभृतपद्मभाजनं ध्यात्वा प्रेतासनस्थां आलीढपदां नग्नां ऊर्द्धकेशां कपालमुकुटां

---

[1] A फुत्॰ ।    [2] A ॰डुम्ब॰ ।    [3] N ॰नन्तरं ।

[4] AN omit.    [5] ANC ह्रीःकारं, B ह्रीँ only.

[6] B ॰ग्निदेदी॰ ।    [7] B omits चतु॰...॰भाजनं ।

पञ्चमुद्रोपेतां चतुर्भुजां दक्षिणे [1]वज्रवज्राङ्कुशधरां वामे कपालखट्वाङ्गतर्ज्जनीपाशधरां एकमुखीं त्रिनेत्रां भृकुटी-करालवदनां वज्रघोणां सुभीषणां बृहदुदरां ललज्जिह्वां भावयेत्। ॐ वज्रवाराहि आवेशय सर्व्वदुष्टान् ह्रीँ स्वाहा—उपहृदयम्, ॐ हुँ ह्रीँ [2]हाँ—हृदयं लक्षं जपेत् समाहितो भूत्वा। सिध्यति नात्र संशयः।

ॐ अः ह्रीँ हुँ हाँ हः। अनेन मन्त्रेण महामांसचूर्णं कृत्वा धूपं दद्यात् पटाग्रतः। सिध्यति दिनैकविंशत्या यावन्नान्यथा। ॐ ह्रीँ हैँ[3] हाँ[4] हः हः हः हीः हीः हेँ[5] हेः फेत्कारं दद्यान्निशायां बलिम् सर्व्वमार[6]प्रशमनार्थम्। निशाबलिः पञ्चोपचारेण दातव्यः। यस्य कस्यचिन्न कथनीयम्। वज्रयोगिन्योऽधितिष्ठन्ति तन्नात्र संशयः। श्रीवज्रवाराहीकल्पः सर्वार्थसाधकः।

॥ वज्रवाराहीसाधनम्[7] ॥

---

## 225.

पँकारपरिणतं रक्तपद्मं तस्योपरि यँकारपरिणतं वायु-मण्डलं कृष्णं [8]धन्वाकारं ध्वजाङ्कं रेफपरिणतं रक्तं त्रिकोण-मग्निमण्डलं ज्वालाङ्कं वँभवं अब्मण्डलं श्वेतं वर्त्तुलं घटाङ्कं लँकारजं पृथिवीमण्डलं चतुरस्रं हरितं सुँकारसम्भवं सुमेरुं

---

[1] ANC वज्राङ्कु०।
[2] AN हाँ, C ह्रा।
[3] ANC ऊँ।
[4] ANC हाँ।
[5] AC फँ फँ फँ, N फैँ फैँ फैँ।
[6] B ०प्रमनं।
[7] This colophon is found only in Nb.
[8] AC धन्वाभं।

चतुरस्रं चतुर्द्वारं अष्टशृङ्गोपशोभितं तन्मध्ये पँकारपरिणतं पद्मं तस्योपरि हुँसम्भवं विश्ववज्रं तद्वरटके आलिकालियोगं तन्मध्ये वँकारपरिणतं वज्रम् । एतत्परिणतां वज्रवाराहीं रक्तां त्रिनेत्रां मुक्तकेशां नग्नां खण्डमण्डितमेखलां शतार्द्धसार्द्र[1]नरशिरोमालाप्रलम्बितां वामभुजे कपालं दुष्टमाराद्यसृग्धरं दक्षिणे—

तर्ज्जयन्तीं दिशः सर्व्व[2]दुष्टतर्ज्जनवज्रिकाम् ।
कल्पवह्निमहातेजां स्रवन्तीं रुधिरप्रियाम् ॥

ऊर्द्धपादस्थितां भावयेत् । पद्मस्य पूर्व्वादिपत्रे—

डाकिनीं तु तथा लामां खण्डरोहां तु रूपिणीम् ।
विदिक्पत्रे तथा भाव्याः करोटाश्चत्वारः शोभनाः ॥

मन्त्रं चात्र— ॐ सर्व्वबुद्धडाकिनीये वज्रवर्णनीये हुँ हुँ[3] फट् फट्[4] स्वाहा ।

॥ श्री ओडियान[5]वज्रपीठविनिर्गत ऊर्द्धपाद[6]वज्रवाराहीसाधनं समाप्तम् ॥

---

[1] AC ०सार्द्ध० ।　[2] B सर्व्वां ।
[3] N adds a third हुँ ।　[4] BC फट् only.
[5] B ०ओड्यान० ।　[6] B omits ०ऊर्द्धपाद० ।

226.

प्रथमं तावद् योगी श्मशानादौ मनोरमे स्थाने स्वहृदीन्दौ ॐकारकिरणैर्गुरुबुद्धबोधिसत्त्वानानीय पुरतोऽवलम्ब्य पूजापापदेशनादिकं कृत्वा खसमं त्रैधातुकं विचिन्त्य हुँवज्रीकृतभूमौ श्मशानाष्टकमध्ये धर्म्मोदयान्तर्गतपद्मवरटके चन्द्रस्थरविसोमसम्पुटस्थवँकारवज्रं तद्वीजसमुद्भवां भगवतीं वज्रवाराहीं प्रलयानलसन्निभां एकवक्त्रां द्विभुजां दक्षिणे—

तर्ज्जयन्तीं दिशः सर्व्वदुष्टतर्ज्जनवज्रिकाम् ।

वामे [1]कपालं विश्वपताकाविराजितबाहुदण्डासक्तखट्वाङ्गधरां भैरवकालरात्र्याक्रान्तां प्रत्यालीढेन ताण्डवां दिग्वासां मुक्तकेशां खण्डमण्डितमेखलां दंष्ट्राकरालवदनां त्रिनेत्रां विकृताननां विश्ववज्रधरां मूर्ध्नि वज्र[2]मालाकपालशोभितां मुण्डस्रग्दामदेहोभयशोभां सर्व्वालङ्कारभूषिताङ्गीं सर्व्वबुद्धाभिषेकजां वैरोचनकुलोद्भवां सर्व्वसिद्धिप्रदायिकां स्फुरत्संहारविग्रहाम्—

पूजास्तुत्य[3]मृतास्वादं कृत्वा योगी समाहितः ।
सादरं भावयन् नित्यं लघु बुद्धत्व[4]माप्नुते ॥

भावनां कृत्वा न्यासं कुर्य्यात् बलिं च दद्याद् योगवित् ।
ॐ वँ वज्रवाराही नाभौ, हाँ[5] याँ यामिनी हृदि, ह्रीँ मोँ

---

[1] ANC कपालखट्वाङ्गधरां ।
[2] AN वज्रचक्र०, B वक्र० ।
[3] A ०न्द्रता० ।
[4] ANCB ०मवाप्यते ।
[5] AC हूँ ।

मोहनी वक्त्रे, ह्रें[1] ह्रौं सञ्चालनी शिरसि, हुँ हुँ सन्त्रासनी शिखायाम्, फट् फट् चण्डिका[2] सर्व्वाङ्गेष्वस्त्रम्—

नाभौ हृदि तथा वक्त्रे शिरः शिखास्त्रमेव च ।
[3]कृत्वाग्रग्रंथ्या खलु मध्यसूची
अङ्गुष्ठवज्रो दृढं संप्रपीड्य ।
संस्थाप्यतामधो ललाटदेशे
आवर्त्त्यावर्त्तेन च विभ्रामयेत् ॥

आक्रान्तपादोर्द्ध्वदृष्टिस्तु मूर्द्ध्ना फेंकारनादतः दशदिग्लोकधातुस्था वीरयोगिनीः आकर्षयेत्— ॐ योगशुद्धाः सर्व्वधर्म्माः योगशुद्धोऽहं ॐ [4]अचण्ड होः जः हुँ वँ होः वज्रडाकिन्यः समयस्त्वं दृश्यहोः। वज्राञ्जल्या ऊर्द्ध्वविकचबलिं दद्यान्निशार्द्धके— ॐ ख ख खाहि खाहि सर्व्वयक्षराक्षसभूतप्रेतपिशाचोन्मादापस्मारडाकडाकिन्यादय इमं बलिं गृह्णन्तु समयं रक्षन्तु समय[5]सिद्धिं प्रयच्छन्तु यथैवं यथेष्टं भुञ्जथ पिबथ मातिक्रमथ मम[6] सर्व्वाकारसत्सुखविशुद्धये सहायका भवन्तु हुँ हुँ फट् [7]फट् स्वाहा— बलिमन्त्रः। ॐ वज्रवैरोचनीये [8]हुँ फट् स्वाहा— हृदयमन्त्रं दशाक्षरम् । ॐ सर्व्वबुद्धडाकिनीये वज्रवर्णनीये हुँ हुँ फट् [9]फट् स्वाहा। उपहृदयमेकविंशत्यक्षरम्। ॐ सर्व्ववज्रकामिनि सर्व्वभक्ष्यं शोधय गुह्यवज्रिणि हुँ स्वाहा— सर्व्वभक्ष्यशोधनमन्त्रः।

---

1 AN ह्रूँ ।
2 The MS B ends here.
3 The metre in this Śloka is faulty.
4 AC आरलि० ।
5 AC मम ।
6 AC omit.
7 C omits.
8 C omits ऊं फट् ।
9 C omits.

अथवा उपदेशः— स्वचित्तं स्थिरीकर्त्तुकामः स्वनाभिकमलोपरि सोमपुटान्तस्थसर्षपसूक्ष्मवँकारविनिर्गतमृणालतन्वाकाररश्मिं ध्यायात्, त्रैधातुकं प्रभास्वरं महासुखाकारं पश्येदिति ।

॥ संक्षिप्तवज्रवाराहीसाधनं समाप्तम् ॥

---

227.

नमो वज्रवाराह्यै ।

नभोनिभं जगन्मत्वा सम्बोधिं च तथा मनः ।
स्थापयामि जगद् बोधौ वज्रवाराहिकात्मकः ॥

मनोऽनुकूले श्मशानादौ स्वहृदि चन्द्रे ॐकारकिरणैर्नभसि गुरुबुद्धबोधिसत्त्वान् दृष्ट्वा पापदेशनादिकं कुर्य्यात्। ततो निरालम्बशून्यतां भावयेत्। हुँवज्री[1]भूतभूम्यादौ श्मशानाष्टकमध्ये धर्म्मधातुमयधर्म्मोदयान्तर्गतपद्मवरटके चन्द्रस्थरविसोमसम्पुटस्थवँकारवज्रसम्भवां भगवतीं भावयेत् वज्रवाराहीं प्रलयानलसन्निभां द्विभुजैकवक्त्रां दक्षिणे तर्ज्जयन्तीं दुष्टतर्ज्जनवज्रिकां वामे कपालखट्वाङ्गधरां भैरवकालराज्याक्रान्तां प्रत्यालीढेन सताण्डवां दिगम्बरां मुक्तकेशां खण्डमण्डितमेखलां दंष्ट्राकरालवदनां त्रिनेत्रां विश्ववज्रधरां वज्रमालाकपालमूर्द्धजां मुण्डस्रग्दामदेहशोभां सर्व्वालङ्कार[2]शोभितां सर्व्वबुद्धाभिषेकां वैरोचनकुलोद्भवां सर्व्वसिद्धिप्रदायिकां स्फुरत्संहारविग्रहाम् ।

---

[1] AC ०भ्रकुट०, N ०भ्रत० ।    [2] N ०भूषितां ।

पूजास्तुत्यमृतास्वादं[1] कृत्वा[2] योगपरायणः ।
सादरं भावयन् नित्यं लघु बुद्धत्वमाप्नुयात् ।

भावनाखिन्नो मन्त्रं जपेत्—ॐ वज्रवैरोचनीये स्वाहा । अत्रोपदेशः स्वनाभिकमलोपरि सोमसम्पुटान्तर्गतमृणालतन्त्वाकाररश्मिं ध्यायात् । ततः त्रैधातुकं प्रभास्वरतया तत् चित्तं सुखशान्तमाद्यमनुत्पन्नं पश्येदिति ।

॥ संक्षिप्तवज्रवाराहीसाधनं समाप्तम् ॥

---

## 228.

नमो नैरात्म्यायै ।

डोम्बीहेरुकपादैर्देवीचक्रस्य भावना कथिता ।
सञ्चिन्त्य सकलं तत्त्वं हे[3]वज्रात् योगिनीतन्त्रात् ॥
नभसि भट्टारकं दृष्ट्वा गुरुकुलिशेश्वरं प्रभुम् ।
पूजयेत् वन्दयेत् धीमानक्षोभ्यप्रतिरूपकम् ॥
स्वबीजं हृदये ध्यात्वा पूजामेघं प्रकल्पयेत् ।
अष्टाभिर्मातृभिर्नित्यं पञ्चामृतप्रयोगतः ॥
[4]गौर्य्याद्याः पञ्च योगिन्यः पञ्चामृतधरा [5]मताः ।
शबरी चण्डाली[6] डोम्बी [7]रसार्द्रालिङ्गनैर्युताः ॥
अघं च देशयेन्नित्यं पुण्यं चैवानुमोदयेत् ।
चिरत्नशरणं यायाद् बोधौ चित्तं बिभर्त्ति च ॥

---

[1] AC ०स्वादनं
[2] N adds योगी after this.
[3] AC ०वज्रयो० ।
[4] This śloka is omitted in A.
[5] C म्रताः ।
[6] N ०लिनी ।
[7] A रसमुद्गसर्व्वा. C रसद्गमर्व्वा (?), N रसडमर्व्व (?) ।

प्रथमं ध्यायान्मैत्रीं तदनु करुणां विभावयेत् ।
पुनरपि मुदितां ध्यायादुपेक्षां सर्व्वशेषतः ॥

तदनु जिनमन्त्रं पठेत्— ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम् । स्वपरं विभाव्य शून्यं प्रणिधानमनुस्मरेद् योगी ।

रेफेण सूर्य्यं पुरतो विभाव्य
तस्मिन् रवौ हुँभवविश्ववज्रम् ।
तेनैव वज्रेण विभावयेच्च
प्राकारतत्पञ्जरबन्धनं च ॥

[1]खधातौ चिन्तयेद् धीमान् प्र[2]ज्ञामेकाररूपिणीम् ।
तस्मिन् विभावयेत् पृथ्वीं चतुरस्रां हरीतिकाम् ॥
पृथ्वीमण्डलमध्यस्थां अब्मण्डलं विभावयेत् ।
अप्सु तेजः पुनर्ध्यायादग्नौ च मरुन्मण्डलम् ॥
मरुन्मण्डलमध्यस्थं आत्मानं चिन्तयेत् ततः ।
मिश्रीभूय भवेच्चक्रमेका[3]कारेण चात्मना ॥
चतुष्कोणं चतुर्द्वारं अष्टस्तम्भोपशोभितम् ।
हारार्द्धहारसंयुक्तं वज्रसूत्रैरलङ्कृतम् ॥
तस्मिंश्चक्रे गतप्राणान् पञ्चदशं विभावयेत् ।
योगिनीककुभोद्देशात् आसनं पञ्चदशं मतम् ॥
आसनोपरि [4]चन्द्रं च चन्द्रस्योपरि भास्करम् ।
अनयोर्मध्यगतं बीजं मूलस्वरादिकं न्यसेत् ॥
आदर्शसमताज्ञानौ चन्द्रसूर्य्यौ प्रकीर्त्तितौ ।
अङ्कारसम्भवा कर्त्रिः प्रत्यवेक्षणमुच्यते ॥

---

[1] AC खघा० ।
[2] AC ०ज्ञानमे० ।
[3] A ०चक्रमव, N चक्रमेवं ।
[4] चन्द्रं च omitted in AC.

एषामैक्यमनुष्ठानं निष्पत्तिः शुद्धधर्म्मता ।
पञ्चज्ञानात्मकं देहं योगिनीनां प्रकीर्त्तितम् ॥
चन्द्रार्काभ्यां च कर्त्र्या शबलीभूतं यथा जलम् ।
मिश्रीभूय पुनः पश्चात् ज्ञेया नैरात्म्ययोगिनी ॥
कृष्णवर्णा महाघोरा पञ्चमुद्राविभूषिता ।
सव्ये कर्त्तिर्महाभीमाऽवसव्ये पद्मभाजनम् ।
अवसव्ये वज्रखट्वाङ्गं व्याघ्रचर्म्मा[1]वृता कटौ ॥

अ आ इ ई उ च कथितानि तु नैरात्म्यादीनाम्, ऊ ऋ ॠ ऌ इति च प्रोक्तानि पुक्क[2]स्यादीनाम्, ॡ ए ऐ ओ बीजानीति गौर्य्यादीनाम्, औ अं बीजे पुनरपि कथिते अधोर्द्ध्ववासिन्याः। चित्तशाश्वतरत्नेशामिताभामोघसिद्धिभिः तान्[3] मुद्रयेत् नैरात्म्यादीन् प्रज्ञापुटे व्यवस्थितान् ।

चित्तशाश्वतरत्नेशअमितायुस्तथागतैः ।
विदिक्स्थान् पुक्कस्यादीन् मुद्रयेदनुलोमतः ॥
द्वेषमोहपिशुनैस्तु रागवज्रेण मुद्रणम् ।
योगिनीनां चतसृणां द्वारस्थानां सदैव तु ॥
कायवाङ्मुद्रणं कुर्य्यात् अधोर्द्ध्वेषु समाहितः ।
[4]मुद्यते लक्ष[5]णेनेति मुद्रणं तेन भण्यते ॥
इन्द्रे वज्रा यमे गौरी वारुण्यां वारियोगिनी ।
कौबेरे वज्रडाकी[6] च मध्ये नैरात्म्ययोगिनी ॥
ऐशाने पुक्कसी ख्याता पावके शबरी तथा ।
चण्डाली राक्षसाशायां वायव्ये डोम्बिनी[7] तथा ॥

---

[1] वृता कटिः in ANC.
[2] AC प्रक्का० ।
[3] A omits मुद्रयेत्...पुक्कस्यादीन्
[4] A मुद्य० ।
[6] N ०तेनेति ।
[5] AC ०किनी ।
[7] AC डाकिनी ।

पूर्व्वद्वारे पुनर्गौरी दक्षिणे चौरिका तथा ।
वेताली पश्चिमे द्वारे उत्तरे घस्मरी तथा ॥
अधरे भूचरी ख्याता ऊर्द्ध्वे च खेचरी स्मृता ।
परमानन्ददाः सर्व्वा यथा नैरात्म्ययोगिनी ॥
स्वबीजं हृदये ध्यात्वा रश्मीन् निश्चारयेत् ततः ।
आकृष्य तेन सम्बुद्धान् पूजयेदष्टमातृभिः ॥
पश्चादनुनाथ[1]नां विदधीत भगवत्सु महात्मसु ।
भगवन्तः सर्व्वतथागता अभिषेकपदं मां ददन्तु ॥
पश्चादमृतभृतैः कुम्भैरभिषिच्यते बुधः ।
सेचयन् सर्व्वसम्बुद्धैः चित्तेशमुकुटो भवेत् ॥
प्रथमं भावयेत् कृष्णां द्वितीये रक्तां विभावयेत् ।
तृतीये भावयेत् पीतां चतुर्थे हरितां तथा ॥
पञ्चमे नीलवर्णाभां षष्ठे सुशुक्लदेहिकाम् ।
षडङ्गां भावयेद् योगी पश्चाद् वर्णविवर्जिताम् ॥
रूपस्कन्धे भवेद् वज्रा गौरी वेदनायां स्मृता ।
संज्ञायां वारियोगिनी संस्कारे वज्रडाकिनी ॥
विज्ञानस्कन्धरूपेण स्थिता नैरात्म्ययोगिनी ।
मण्डले सा स्थिता भीमा भयस्यापि भयङ्करी ॥
पृथिवी पुक्कसी ख्याता अब्धातुः शबरी मता ।
तेजश्चण्डालिनी ज्ञेया वायुर्डोम्बी प्रकीर्त्तिता ॥
रूपे गौरी सदा ख्याता शब्दे चौरी[2] प्रकीर्त्तिता ।
वेताली गन्धविषये रसे च घस्मरी तथा ॥

---

[1] AC नास्ति देवी ।
[2] A रौरी ।

स्पर्शे च भूचरी ख्याता खेचरी धर्मधातुतः।
सदा ह्यसारविशुद्ध्या वै सिध्यन्ति तत्त्वयोगिनः[1] ॥
चक्षुषोर्मोहवज्री च कर्णयोर्द्वेषवज्रिका।
[2]घ्राणे मात्सर्य्यकी ख्याता वक्त्रे च रागवज्रिका।
स्पर्शे ईर्ष्यावज्री च मनो नैरात्म्ययोगिनी ॥
कवचमेभिर्महाशुद्ध्या इन्द्रियाणां विशुद्धये।
नवमार्य्यं धृतं मुण्डं कर्त्तिका देवच्छेदनी ॥
कपालक्लेशमुण्डेन स्कन्धस्योपरि [3]चाशनम्।
गुर्व्वाचार्य्येष्टदेवस्य नमनार्थं चक्रिका धृता ॥
दुर्भाषस्याश्रवणाय गुरोर्वज्रधरस्य च।
कुण्डलं श्रवणयोर्धार्य्यं मन्त्रं जप्तुं च कण्ठिका ॥
रुचकः प्राणि[4]वधं त्यक्तुं मुद्रां भजितुं च[5] मेखलाम्।
पञ्चबुद्धस्य सूत्रेण शरीरं मुद्रितं सदा ॥

मन्त्रः। ॐ अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः स्वाहा। मात्राविशुद्धिं कथयामि—

अक्षोभ्यश्चक्रिरूपेणामिताभः कुण्डलात्मकः।
रत्नेशः कण्ठमालायां हस्ते वैरोचनः स्मृतः ॥
मेखलायां स्थितोऽमोघः पञ्चैते शुद्धमात्रिकाः।
दोषपरिहाणितो धार्य्या योगिनीभिः सदा धृताः ॥

अध्यात्मरूपं कथयामि—

स्त्रीरूपेण [6]वश्यं लोके क्रोधरूपेण चासनम्।
आलिकालिसमापत्त्या बाह्यद्वन्द्वं निषेवितम् ॥

---

[1] AC ०गिनीः।
[2] AC omit this line.
[3] AC साधनं।
[4] AC ०बन्धं।
[5] AC ०भञ्जितुञ्च।
[6] A omits वश्यं ... ०रूपेण।

पुरक्षोभमन्त्रः— अकचटतपयस स्वाहा। सार्व्वभौतिकबलिमन्त्रः— ॐ अकारो मुखं सर्व्वधर्म्माणामाद्यमनुत्पन्नत्वात् ॐ आः हुँ फट् स्वाहा।

नैरात्म्ययोगिन्या[श्चैव] संवरं कथयामि ते।
महामुद्रा स्थिता नाभौ महासुख[1]करा शुभा।
तीक्ष्णत्वादग्निरूपेण रुषिता सा तु मातृभिः॥
आदिस्वरस्वभावा सा धीति बुद्धैः प्रकल्पिता।
व्याप्य तिष्ठति त्रैधा[2]तुं न ज्ञाता सा पृथग्जनैः॥
[3]नैरात्म्यकमध्यस्थं च अनाहतमधोमुखम्[4]।
[5]स्रवत्यनिर्व्वर्त्तकयोगेन बोधिचित्तं सदैव तु॥
तस्मात् कायेऽत्र ये (नाड्यो) ललनारसनावधूतयः।
कायवाक्चित्तरूपेणावतीर्णाः कर्त्रि[6]मुद्रिकाः॥
ललना प्रज्ञास्वभावेन रसनोपायेन संस्थिता।
अवधूती मध्यदेशे तु महासुखाधाररूपिणी॥
अक्षोभ्यावहा ललना रसना रक्तप्रवाहिनी।
अवधूत्यमितनाथस्य आधारभाविनी सदा॥
कर्म्ममुद्रासुखावत्यां त्रयो नाड्यः स्वकालतः[7]।
स्रवन्ति कायवाक्चित्तं वज्ररत्नाब्जजन्मिनम्॥
मूत्रकालस्तु वज्रस्य वमन्तं रत्नधारिणम्।
अभिसंबुद्धरूपेणामितनाथस्य कथ्यते॥
सदैवोत्पद्यते ज्ञानमुक्तं वावसरेऽपि वा।
सहजं परमं सौख्यं पित्रोरपि सुखावहम्॥

---

[1] MSS ०कालिका or ०कारिका। [2] AC ०तुकं।
[3] AC नाना०। [4] A मध्ये सुखं।
[5] AC प्रवर्त्त० [6] N कर्ण०। [7] AC स्वभावतः।

यथा निशायां हि भुनक्ति कश्चित्
वेश्मान्तरे दीपितदीपकः सन् ।
पर्य्येष्टिकर्त्तुस्तनुभिस्तमोवत्
मोहान्धकारेण सुखं तथा स्यात् ॥

ज्ञात्वैवं भवसागरं विषजलं रागादिनक्राकुलं
गम्भीरालहरीलताविघटितं सौख्यैकतीरं महत् ।
कस्मात् बोधिधियो जनाः क्षणमपि स्वार्थैकनिष्ठोद्यताः[1]
पारं यान्ति न मोहपाशवसनं त्यक्त्वा [2]प्रयान्त्यद्भुतम् ॥

उत्पत्तिक्रमभावनां प्रथमतः कुर्य्यात् सुधीः शाश्वतं
मुद्रामन्त्रविशुद्धिमाचकवचं सर्व्वान्न वै विस्मरेत् ।
पश्चादुत्कर्षमन्वितः प्रतिमुहुस्तत्त्वैकचेताः सुधी-
रुत्पन्नक्रमभावनाभवभिदं ध्यायात् समस्तं सदा ॥

व्याघ्रासीनश्चरेद् यो विविधफणिवरैर्भूषितो यः क्षमावान्
बाढं सम्भोगयुते विविधमधुयुते कङ्कगेहाख्यनाम्नि ।
तेनेदं साधने[4]न्द्रं परहितरुचिना गुह्यं[5]प्रज्ञाङ्गसङ्गं
लोकार्थोद्भासितं यत् क्षमत जिनसुता भाषितं यन्मयेदम् ॥

॥ अमृतप्रभा नाम साधनोपायिका समाप्ता ॥

---

[1] A ०ष्ठायुताः, N ०ष्ठोयुताः ।
[2] AC समासा० ।
[3] A भ्राटा ? ।
[4] AN ०दं ।
[5] AC ०नाङ्कुष्ठ० ।

229.

[1]कुलेजन्मानुन्मादी समयी हेवज्रदेशकः।
कृपावान् गुरुभक्तश्च भवेयं जन्मजन्मनि ॥
वज्रघण्टारणत्पाणिर्गम्भीरधर्म्मपाठकः।
योषिच्छुक्रसमाहारी भवेयं जन्मजन्मनि ॥
मोहवज्री कथं कृष्णा मोहवज्रस्वभावतः।
रूपस्कन्धो भवेन्मोहो रूपश्चित्तेशलक्षितम् ॥
अनुरागैकहेतुत्वादतीतैर्वारुणं मनः।
अनुरागिमनश्चिह्नं रागवज्राभलक्षणम् ॥
रागवज्रा कथं श्यामा रागो रक्तो यतो मतः।
चतुर्वर्णैरियं यस्मान्निष्पन्ना श्यामवर्णतः ॥
षट्तथागतरूपोऽयममोघसम्भवो मतः।
अस्याः [2]षड्रसरूपिण्याः श्यामत्वेनोपलक्षणम् ॥
ईर्ष्या मोहस[मु]द्भूता मोहो वैरोचनो मतः।
प्रज्ञोपायादतश्चेर्ष्या चित्तवज्राभलक्षणा ॥
चित्तमेव मनो यस्मात् ज्ञानसत्त्वाः कथं सिताः।
मनोरूपाद्दतं न स्यात् तेनेयं रूपमुद्रिता ॥
षड् विज्ञप्तिः सदा षोढा योगिनीमूर्त्तिवर्ज्जिताः।
पूर्व्वपक्षपरीहारस्फुटीकृतेन यत् शुभम् ॥
मयाप्तं तेन ते लोका मन्त्रमार्गे सुनिश्चयम्।
बुद्ध्वा बुद्धत्वमभ्रान्त्या प्राप्नुवन्तु क्षणादमी ॥

॥ नैरात्म्यामण्डलयोगिनीविशुद्धिः समाप्ता ॥

---

[1] AC omit the first two Ślokas. [2] AC सद्रस०।

230.

पूर्व्वोक्तविधानेन शून्यतानन्तरं चन्द्रमण्डले [1]नील-अँकारज[2]सबीजकर्त्तिं स्फुरणादिपूर्व्वकं परिणम्य शव-हृच्चन्द्रस्थार्द्धपर्य्यङ्क[3]नाव्यस्थितां नैरात्म्यां कृष्णां एकमुखां ऊर्द्धपिङ्गलकेशां अक्षोभ्यमुकुटिनीं दंष्ट्राकराललललज्जिह्वां दक्षिणेन कर्त्तिधारिणीं वामे कपालखट्वाङ्गधारिणीं रक्त-वर्त्तुलत्रिनेत्रां पञ्चमुद्राविभूषणां तच्छिरःकण्ठहृदयेषु ॐ आः[4] हुँकारान्, हृच्चन्द्रकर्त्तिमुष्टिचन्द्रे अँकारं दृष्ट्वा इमं मन्त्रं जपेत्— ॐ अ आ इ ई उ ऊ ऋ ॠ[5] ऌ ॡ ए ऐ ओ औ अं अः[6] स्वाहा।

॥ केवलनैरात्म्यासाधनं समाप्तम् ॥

231.

प्रथमं सर्व्वसत्त्वाभ्यु[7]द्धरणलक्षणां करुणां विभाव्य सबाह्याभ्यन्तरशून्यतां चालम्ब्य अन्तरीक्षे चन्द्रमण्डले अँकारेण कर्त्तिं तन्मुष्टिचन्द्रे अँकारं चिन्तयेत्। ततो योगिनीचक्रस्फुरणसंहरणं दृष्ट्वा तत्सर्व्वं परिणम्य शवहृ-चन्द्रमण्डले[8] भगवतीं नैरात्म्यां कृष्णवर्णां कर्त्तिकपाल-खट्वाङ्गगृहीतद्विभुजामेकमुखीं रक्तवर्त्तुलत्रिनेत्रां ऊर्द्ध-पिङ्गलकेशां चिन्तयेत्। शिरःकण्ठहृदयेषु ॐ आः

1 AC लीन॰। 2 ANC ॰बीज॰।
3 ANC पर्य्यङ्के। 4 ANC अः।
5 B omits ऋ ॠ 6 B अ।
7 B ॰द्धरणं विभाव्य। 8 AC ॰लमध्ये।

हुँकारान् हृच्चन्द्रकर्त्तिमुष्टिचन्द्रे अँकारं दृष्ट्वा मन्त्रं जपेत्। ॐ अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं [अः] स्वाहा— जापमन्त्रः।

॥ नैरात्म्यासाधनम्।
। [1]कृतिः सहजविलासस्य ॥

---

## 232.

नमो वज्रयोगिन्यै।

ॐ आः हुँ। प्रथमं तावन्मन्त्री क्वचित् कस्मिन्नपि प्रदेशे कस्मिन्नप्यासने उपविश्य वज्रयोगिनीभावनामारभेत। तत्र स्वनाभौ विकसितं शुक्लवर्णं पद्मं भावयेत्। तत्रोपरि अतिरक्तवर्णसूर्य्यमण्डलं भावयेत्। तत्रोपरि सिन्दूरवर्णां मध्यह्रीँकारस्थितां धर्म्मोदयां भावयेत्। तत्राप्युपरि भट्टारिकां वज्रयोगिनीं तत्स्थितह्रीँकारपरिणतां पीतवर्णां स्वयमेव स्वकर्त्तिकर्त्तितस्वमस्तकवामहस्तस्थितां दक्षिणहस्तकर्त्ति[2]सहितां ऊर्द्ध्वविस्तृतवामबाहुं अधोनमित-दक्षिणबाहुं वासःशून्यां प्रसारितदक्षिणपादां सङ्कुचित-वामपादां भावयेत्। कबन्धान्निःसृत्यासृग्धारा स्वमुखे प्रविशति, अपरे उभयोः पार्श्व[3]योगिन्योर्मुखे प्रविशति इति भावयेत्। वामदक्षिणपार्श्वयोः श्यामवर्णवज्रवर्णनी-

---

[1] B omits the author.
[2] C ०स्थितां।
[3] AC पार्श्वयोः।

पीतवर्णवज्रवैरोचन्यौ वामदक्षिणहस्तकर्त्रिसहिते दक्षिण-वामहस्तकर्परसहिते प्रसारितवामपादप्रसारितदक्षिण-पादे सङ्कुचितेतरपादे मुक्तकेश्यौ भावयेत्। उभयोः पार्श्वयोरुभयोर्योगिन्योर्म्मध्ये अन्तरीक्षे अतिभयाकुलं श्मशानं भावयेत्— इति भावना।

पूजोच्यते— मण्डलं कृत्वा धर्म्मोदयां सूर्य्यालयलग्नां लिखेत् मध्यह्रीँकारसहितां ततः पूर्व्वोक्तभावनया भट्टारिकां मध्ये आरोप्य ॐ सर्व्वबुद्धडाकिनीये इत्यादि-मन्त्रेण धर्म्मोदयमध्ये पूजयेत्। पश्चादर्घः। ॐ सर्व्व-बुद्धडाकिनीये हुँ स्वाहेति मन्त्रेण, पश्चाद् वामपार्श्वे ॐ वज्रवर्णनीये हुँ स्वाहेति मन्त्रेण, पश्चाद् दक्षिणपार्श्वे ॐ वज्रवैरोचनीये हुँ[1] स्वाहेति अनेन, पश्चात् पुनरपि ओडियान पूर्णगिरि कामाख्या सिरिहट्ट इत्यनेन पूजयेत्। पुनरपि धर्म्मसम्भोगनिर्म्माणमहासुख इत्यनेन। ॐ ॐ ॐ सर्व्वबुद्धडाकिनीये वज्रवर्णनीये वज्रवैरोचनीये हुँ हुँ हुँ फट् फट् फट् स्वाहा— इति जपमन्त्रः।

॥ वज्रयोगिनीसाधनं समाप्तम् ॥

---

[1] C omits.

## 233.

ॐ नमो वज्रयोगिन्यै ।

प्रथमं वँकारमध्ये पँकारजविश्वपद्मवरटके रक्तरँकार-परिणतसूर्य्यमण्डलोपरि हुँकारपरिणामेन भगवतीं वज्र-योगिनीं मुक्तकेशां उग्रकिरणां नग्नां प्रत्यालीढस्थितां द्विभुजां पीनोन्नतपयोधरां रक्तवर्णां चलत्प्रचण्डवर्त्तुल-त्रिनयनां सभ्रूभङ्ग[1]भृकुटिनीं दंष्ट्राकराललल्लद्रसनां [2]उग्र-शवारूढां नवयौवनां हारार्द्धहारकिङ्किणीज्वालावनद्ध-नितम्बां विचित्ररत्नालङ्कृतनूपुरधरां षण्मुद्रोपेतां वामे खट्वाङ्गकरोटधरां दक्षिणे वज्रधरां अतिभीमरूपिणीं श्मशानादौ भावयेत् । भावनाखिन्ना मन्त्री मन्त्रं जपेत् । तत्रायं मूलमन्त्रः— ॐ सर्व्वबुद्धडाकिनीये ॐ वज्रवर्णनीये ॐ वज्रवैरोचनीये हुँ हुँ हुँ फट् फट् फट् स्वाहा । ॐ वज्रडाकिनी ह्रीः हुँ फट् स्वाहा— हृदयमन्त्रः । ॐ वज्र-योगिनी हुँ फट्— उपहृदयः । अथ बलिमन्त्रः— ॐ वज्र-डाकिनी इमं बलिं गृह्ण गृह्ण [3]हह हह खखखख (ययय) अअअ[4]अ मम सिद्धिं प्रयच्छ हुँ फट् स्वाहा । अष्टम्यां चतुर्द्दश्यां च नियमेन पूजादिकं श्मशानादौ कर्त्तव्यमिति ।

॥ वज्रयोगिनीसाधनं समाप्तम् ॥

---

[1] A °भृङ्ग° ।
[2] X उत्पाग्रमा° ? ।
[3] AC हह only.
[4] A omits the last अ ।

## 234.

वज्रयोगिन्यै नमः।

हृदि नानावर्णपँकारपरिणामेन विश्वपद्मं भावयेत्। तत्रोपरि रक्तवर्णरेफपरिणामेन सूर्य्यमण्डले [1]धर्म्मोदयं समधिकरक्तवर्णं भावयेत्। धर्म्मोदयोपरि रक्तवर्णं [2]ह्रीँ-कारम्। ह्रीँकारादिभिः पूर्व्वोक्तैः समस्तैः परिणामेन वज्रयोगिनीं कनकश्यामां सूर्य्यासने पद्ममध्ये तथाच पार्श्वे डाकिनीद्वयं भावयेत् कर्त्तिकरोटकधरां आलीढपद-संस्थिताम्। ॐ सर्व्वबुद्धडाकिनी[3] वज्रपुष्पे हुँ स्वाहा, मध्ये। अग्रतः, ॐ बुद्धडाकिनी[3] पीतवर्णा वज्रपुष्पे [4]स्वाहा। दक्षिणे, ॐ वज्रवर्णनी श्यामवर्णा वज्रपुष्पे [4]स्वाहा। पश्चिमे, ॐ वज्रवैरोचनी[3] गौरवर्णा वज्रपुष्पे स्वाहा। ॐ धर्म्मकाय वज्रपुष्पे स्वाहा, ॐ सम्भोगकाय वज्रपुष्पे स्वाहा, ॐ निर्म्माणकाय वज्रपुष्पे स्वाहा, मध्ये— ॐ महासुख[5]-वज्रपुष्पे स्वाहा। ॐ ओडियानवज्रपुष्पे स्वाहा, ॐ पूर्णगिरिवज्रपुष्पे स्वाहा, ॐ कामरूपवज्रपुष्पे स्वाहा, मध्ये— ॐ श्रीहट्टवज्रपुष्पे स्वाहा। पुनर्मध्ये— ॐ नमः सर्व्वगुरुबुद्धबोधिसत्त्ववज्रपुष्पे स्वाहा। ॐ नमः सर्व्वबुद्ध-डाकिनी ॐ नमः सर्व्ववज्रवर्णनी ॐ नमः ह्रीँ सर्व्व-बुद्धवैरोचनी हुँ हुँ हुँ फट् फट् फट् स्वाहा।

॥ वज्रयोगिनीसाधनं समाप्तम् ॥

---

[1] A omits धर्म्मोदयं...भावयेत्।

[2] AC omit ह्रीःकारं।

[3] AN ०नीचे।

[4] AN ॐ स्वाहा।

[5] AC ०सुखकाय०।

## 235.

नमो वज्रयोगिन्यै ।

अत्यन्तनिर्मृष्ट[1]दर्पणदले अष्टम्यां सिन्दूरं पातयित्वा तत्र धर्म्मोदयमुद्रां लिखित्वा कोणेषु [2]बाह्यवँबीजं विलिख्य मध्यमन्त्रं च धर्म्मोदयबाह्ये चतुःपार्श्वेषु वामावर्त्तेन नन्द्यावर्त्तं लिखित्वा पुष्पादिभिः सम्पूज्य यथाशक्ति मन्त्रं परिजप्य सिन्दूरं तदेकत्र भाण्डे स्थापयेत् । एवं षण्मासं यावत् कुर्य्यात् । ततो लाङ्गलिकया विषनालनलिकामध्ये तत् सिन्दूरं प्रक्षिप्य श्मशाने निखन्य बलिं पूजां च विधाय मन्त्रं जपेत् । यथाक्रमं एवं प्रत्यहं मासमेकं कुर्य्यात् । ततः सिन्दूरेण नन्द्यावर्त्ताकृतितिलकं विधाय भिक्षार्थं ग्रामं प्रविशेत् । यत्र तत् तिलकं संक्रान्तं [3]दृश्यते तं यत्नेनाराधयेत् इति ।

॥ एवं नन्द्यावर्त्तेन सिद्धशबरपादीयमतवज्रयोगि[4]न्याराधनविधिः ॥

---

## 236.

प्रथममेव रँकारमध्ये पँकारजविश्वदलवरटके रक्तरँकारपरिणतसूर्य्यमण्डलोपरि रक्तहुँकारपरिणतमात्मानं भगवतीं वज्रयोगिनीमुग्रकिरणां नग्नां प्रत्यालीढपदस्थितां द्विभुजां पीनोन्नतपयोधरां रक्तवर्णां महारागस्वभावां चलत्प्रचण्डवर्त्तुलत्रिनयनां सभ्रूभङ्गभृकुटिनीं दंष्ट्राकराल-

---

[1] C ०निस्पष्ट० ।
[2] C वीच्य ।
[3] A दृश्यं ततो ।
[4] AC ०नीसाधन० ।

वदनां ललज्जिह्वां ऊर्द्धज्वलितरक्तकेशां शवारूढां नवयौवनभाग्यां हाराईहारकिङ्किणीशब्द[1]घुर्घुररवविचित्रां रत्नालङ्कृतनूपुररवां पञ्चमुद्रोपेतां वामे कपालं देवासुररुधिरपूरितं दक्षिणकरे कर्त्ति[2]तर्ज्जनीधरां अतिभीमरूपिणीं श्मशानादौ भावयेत्। भावनाखिन्नो मन्त्रं जपेत्। तत्रायं मन्त्रः— ॐ सर्व्वबुद्धडाकिनीये ॐ वज्रवर्णनीये ॐ वज्रवैरोचनीये हुँ हुँ हुँ फट् फट् फट् स्वाहा— मूलमन्त्रः। ॐ वज्रडाकिनीये ह्रौँ हुँ फट् स्वाहा— हृदयमन्त्रः। ॐ वज्रयोगिनीये हुँ फट्—उपहृदयमन्त्रः। [3]बलिमन्त्रः— ॐ वज्रडाकिनी इदं बलिं गृह्ण गृह्ण हहहह खख खख अअअअ मम सिद्धिं प्रयच्छ हुँ फट् स्वाहा। अष्टम्यां पञ्चम्यां चतुर्द्दश्यां बलिपूजादिकं श्मशाने कर्त्तव्यम्।

॥ वज्रयोगिनीसाधनं समाप्तम् ॥

---

237.

बिन्दुमध्यगते देवि कुटिले चार्द्धचन्द्रिके।
तुषारकणिकाभासे[4] हृद्वज्रसमतेजसे ॥
तदेवं चित्तमालोक्य प्रभास्वरमनाविलम्।
जायन्ते तु सर्व्वकामाश्चिन्तामणिरह[5]र्न्निशम् ॥
अरूपिणं यथाकाशं व्यापिलक्षणवर्जितम्।
महामुद्रात्मकं तत्र(था) चित्तरत्नं प्रकाशते ॥

॥ इति वज्रयोगिन्युपदेशः ॥

---

1 AC ०नूपुर०। 2 A कर्त्तित०।
3 Omitted in AN. 4 AC ०भास्वत्।
5 AN ०रिवाह्न०।

238.

ॐ श्रीवज्रयोगिनि सर्व्वभूतप्रेतपिशाचादीन् साधय साधय हन हन दह दह ग्रस ग्रस सर्व्वसिद्धिसाधनानि प्रयच्छ सर्व्वाशां[1] परिपूरय स्वाहा। ॐ श्रीवज्रयोगिनि सर्व्वसिद्धिं कुरु कुरु सर्व्वविघ्नविनायकान् हन हन सम्यक्संबोधये मम बलिं गृह्ण हुँ हुँ हुँ फट् फट् फट स्वाहा।

॥ [ वज्रयोगिन्या बलिविधिः ] ॥

239.

महामायाह्वयं देवं[2] चतुर्म्मुखं चतुर्भुजम्।
अङ्के यस्य तथा देवी चतस्रो दिक्षु चापराः॥
महावज्रधरस्यैव रूपया भीषणाकृतेः।
महामायाभिधानस्य साधनं साधु कथ्यते॥

इह भावनाधिकृतो मन्त्री चतुर्देवीगीतिचोदनाविबुद्धः प्रातरुत्थाय स्वहृत्सूर्य्यस्थहुँकाररश्मिभिरात्मानं विशोध्य कृतमुखशौचादिकः हुँफडितिस्थानात्मयोगरक्षां कृत्वा ध्यानालयं प्रविश्य हुँकारेण अर्घ्यं परिजप्य सुखासनोपविष्टः पुरस्तादन्तरीक्षे भगवन्तं सपरिवारमालोक्य हृन्मन्त्रकिरणोद्भवैः पञ्चोपहारमेघैः सम्पूज्य पापदेशनादिकमिति कुर्य्यात्। देशयाम्यहं आत्मनः पापम्, अनुमोदे सर्व्वपुण्यानि, सर्व्व बुद्धबोधिसत्त्वार्य्यपृथग्जनानां परिणामयामि सर्व्वमात्मनः कुशलमनुत्तरायां सम्यक्सम्बोधौ, आबोधेस्त्रीणि रत्नानि शरणं गच्छामि, बुद्धरत्नं

---

[1] C ०सां। [2] AC चन्द्रं। [3] AC ०सम्बुद्ध०।

धर्म्मरत्नं संघरत्नम्, अहो बताहमनुत्तरां सम्यक्सम्बोधिं अधिगच्छेयं[1] सर्व्वसत्त्वानामर्थाय हिताय यावदेतेषां अत्यन्तनिष्ठे[2] निर्व्वाणे निरुत्तरे च तथागतज्ञाने प्रतिष्ठापनाय। तदनु चित्तमात्रमेवेदं [3]सर्व्वमसत्येव [4]तेन तेनाकारेण प्रख्याति। तद्यथा स्वप्न इत्यधिमुच्य सर्व्वाकारान् परित्यज्य निर्म्मलनभोनिभं निराभासमनन्तं प्रकाशमात्रं पश्येत्, ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति चाधितिष्ठेत्। अनन्तरं पुरस्तादन्तरीक्षस्थूर्य्ये हुँकारेण विश्ववज्रं विचिन्त्य तद्दीप्तरश्मिस्फुरणैरधोवज्रमयीं भूमिं तिर्य्यग्वज्रप्राकारमुपरि वज्रपञ्जरं मध्ये घोरश्मशानं विभाव्य तन्मध्ये कूटागार[5]मेकपुटं सर्व्वरत्नमयं पश्येत्—

चतुरस्रं चतुर्द्वारं चतुस्तोरणभूषितम्।
हाराद्यैरप्सरोभिश्च भास्वद्वेदीचतुष्टयम्॥

तन्मध्ये रक्तकमलमष्टदलं ध्यात्वा तत्कर्णिकायामनादिनिधनं तार[6]मुक्ताफलनिभं ज्ञानामृतबिन्दुं ध्यायात्।

। इत्यय[7]मनादियोगो नाम प्रथमः समाधिः।

मध्यबिन्दुत एव चतुरो बिन्दूनष्टदिग्दलेषु संस्फार्य्य बीजाकारपरिणतान् पश्येत् यथाक्रमं हुँ स्वा आ हाः। यथाक्रमं तेभ्यो वज्रमणिपद्मकर्म्मकुलेशान् तत्कुलानि च संस्फार्य्य पुनस्तेष्वेव संहृत्य तत्परिणताश्चतस्रो योगिनीः पश्येत्। पूर्व्वदले वज्रडाकिनीं नीलवर्णां नीलपीतसित-

[1] AC गच्छे०।
[2] AC ०ष्ठेति।
[3] A सर्व्वतैव।
[4] N omits.
[5] AC ०रात्म०।
[6] AC भाव०।
[7] AC ०मादि०।

हरितवदनां वज्रकपालघण्टाखट्वाङ्ग[1]धारिणीम्, दक्षिणदले रत्नडाकिनीं पीतवर्णां पीतनीलसितहरितवदनां [2]रत्नच्छटात्रिशूलग्रीवानिपीडितजम्बूकपताकाधारिणीम्, पश्चिमदले पद्मडाकिनीं सितवर्णां सितपीतनील[3]हरितवदनां विश्वकमलशरकपालचापधराम्, उत्तरदले विश्वडाकिनीं हरितवर्णां हरितपीतसितनीलवदनां असिडमरुपाशकपालधराम्। चन्द्रासनप्रभाः सर्व्वाः शेष[4]मासां प्रभुमिव नाथमुत्थापयेयुस्ता वज्रगीतिकयाऽनया—

[5]हले सहि विअसिअ कमलु[6] पबोहिउ वज्जें ।
अललललहो महासुहेण आरोहिउ णच्चें ॥
रविकिरणेण पफुल्लिउ कमलु महासुहेण ।
अललललहो महासुहेण आरोहिउ णच्चें ॥

अथ गीतिकानुभावेन भगवान् [7]बिन्दुरूपतां हित्वा बीजद्वयाकारेणाविर्भवति। ॐ हुँ। ततः ॐकाराद् वैरोचनं तत्कुलं च संस्फार्य्य संहरेत्, हुँकारात् पञ्च जिनान् तत्कुलानि च। ततः ॐकारोद्भवया बुद्धडाकिन्या सहैव भगवान् हेरुको हुँकारादुत्पद्यते।

भस्मनोद्धूलितः कृष्णो ललिताक्रासनप्रभः।
कपिशोर्द्ध्वज्वलत्केशः कपालमकुटोत्कटः॥

---

[1] AN ०कपाल०। [2] A omits रत्न०...०वदनां।
[3] C omits ०हरित०। [4] AC ०समासां०।
[5] छाया—
हले सखि! विकसितं कमलं प्रबोधितं वज्रेण।
अललललहो महासुखेनारोपितो नृत्येन॥
रविकिरणेन प्रफुल्लं कमलं महासुखेन।
अललललहो महासुखेनारोपितो नृत्येन॥
[6] A पडोहिउ। [7] AC ज्ञानवि०।

नीलपीतमहाश्वेतहरिताद्यचतुर्म्मुखः।
कपालशरखट्वाङ्गचापधारिचतुर्भुजः॥
पञ्चबुद्धविशुद्ध्या तु पञ्चमुद्राविभूषितः।
चक्रीकुण्डलकण्ठी च हस्ते रुचकमेखलाम्॥
नरचर्म्माम्बरधरो द्वादशारुणलोचनः।
ज्वालामालाकुलक्रोधः परमानन्द[1]सुन्दरः॥
अर्द्धपर्य्यङ्के नाट्यस्थो नवनाट्यरसैर्युतः।
अन्तःकरणोज्ञीर्णैश्च जनौघैर्जगदर्थकृत्॥
प्रियतुल्यायुधा रक्ता तत्कण्ठाश्लेषिदोर्द्वया।
श्रीबुद्धडाकिनी रक्तपीतश्वेतहरिन्मुखी॥
बुद्धा[2]भिषेका शबरी हेवज्रे गीयते यथा।
तथेह बुद्धडाकिन्या हेरुकः संप्र[3]पूज्यते॥
बुद्धो रक्तोऽत्र सत्त्वानां बुद्धकायेन रञ्जनात्।
शुद्धा धर्म्माः प्रकृत्येति वागीशस्यैव शुक्लता॥

तदनु भगवतः चक्षुरिन्द्रिये ॐकारं रक्तं श्रोत्रेन्द्रिये हुँकारं नीलं घ्राणेन्द्रिये त्रौ[4]कारं पीतं जिह्वेन्द्रिये आःकारं सितं उष्णीषस्थाने रेफं हरितं मनसि खकारं सितं चिन्तयेत् इति षडिन्द्रिये षडक्षरन्यासः कवचम्। ॐ आः हुँ इति कायवाक्चित्ताधिष्ठानं यथाक्रमं शिरःकण्ठहृदयेषु। स्तना[5]न्तरे सूर्य्ये स्वदेवताबीजं तज्ज्ञानस्वभावं दृष्ट्वा तत्किरणाङ्कुशैर्ज्ञानमण्डलमाकृष्य हुँकारेण विघ्नानुत्सार्य्य अर्घं दत्त्वा जः हुँ वँ होः इत्याकृष्य प्रवेश्य बद्धा

---

[1] AC ०नन्दनः।
[2] AC वज्रा०।
[3] AC ०युज्य०।
[4] AC त्रि०।
[5] AC ०स्तदन०।

वशीकृत्य तेन सहैकलोलीभूतं समयमण्डलं पश्येत्। ततो ज्ञानबीजरश्मिचोदिततथागतप्रेषिताः पञ्चयोगिन्य आगत्य पञ्चज्ञानाम्बुपूर्णैं रत्नकलशैर्भगवन्तं योगिन्यश्चाभिषिञ्चेयुः। अभिषिच्यमानानां शिरसि स्वकुलेश उत्पद्यते। भगवतोऽक्षोभ्यः, बुद्धडाकिन्यादीनां यथाक्रमं शाश्वताक्षोभ्यरत्नेशवागीशामोघसिद्धयः। ततो ज्ञानबीजरश्मि[1]मुखस्फारिताभिः पञ्चोपहारपञ्चकामगुणपूजाभिर्भगवन्तं भगवतीं च पूजयेत्। ततो भगवन्तं देवीनां मुखैः स्तुयात्—

दंष्ट्रोत्कटमहाभीममुण्डस्रग्दामभूषितम्।
भक्षमाणं महामांसं श्रीहेरुकं नमाम्यहम्॥

इति। ततो दिग्देव्यः स्फुरणयोगेन बुद्धडाकिन्यामन्तर्भवेयुः। ततोऽस्याः शिरसि हृदि नाभौ गुह्ये ऊर्वोश्च यथाक्रमं ॐ हुँ [3]स्वा आ हा इत्येतान् विभाव्य तैरन्योन्यावधि स्फुरद्भिरस्याः शरीरमभिव्याप्य तया ह्रीःकारजरक्तकमलया अकारजमुक्ताकर्णिकया तद्वत् हुँकारजकुलिशॐकारजमणिः प्रारभेत रतिं अनुरागं यामीत्यनेन मन्त्रेण। ततो मणिद्वयरश्मिचोदितास्तथागता आगत्य मुखे प्रविश्य विलीय कमलदले पतेयुः। तत् पञ्चज्ञानामृतं जिह्वाग्रललितेन गृह्यमाणं चिन्तयेदिति।

। श्रीमण्डलराजाग्रीनाम द्वितीयः समाधिः।

ततो भगवच्चो[4]दिता बुद्धडाकिन्यादयः पञ्च[5]सु पञ्चभगवत्कायमेघस्फुरणैः[6] सत्त्वानामर्थं यथाक्रमं आदर्शज्ञानं

[1] AC ०सुख०। [2] A ०भ्रत्रो०। [3] AC स्वाहा। [4] AC ०न्नो०। [5] AC ०स्वकीयच्च। [6] AC स्फुरणादौ।

सुविशुद्धधर्म्मधातुज्ञानं समताज्ञानं प्रत्यवेक्षणाज्ञानं कृत्यानुष्ठानज्ञानं महावज्रधरपदं चोत्पाद्य स्वकायमेघान् मूल[1]-काये संहरेयुरिति ।

। कर्म्मराजाग्रीनाम तृतीयः समाधिः ।

यदि पुनर्योगी चित्तं स्थिरीकर्त्तुमिच्छेत् सर्व्वसमाधीना[2]मग्रनिष्पत्तये, तदा समासतः समाधित्रयं विभाव्य नाभिकमलकर्णिकायां रविसोमसम्पुटप्रान्तेषु निःसन्धिं ध्यात्वा तन्मध्ये सर्षपसूक्ष्मसितस्वच्छज्ञानं बिन्दुरूपं महासुखमयं वीरं विचिन्त्य तद्रश्मिरेखां मृणालतन्तुनिभां चन्द्रमध्येन निर्गत्य सम्पुटं तिर्य्यक् त्रिभिर्व्वेष्टैः संयम्य स्थितां दृष्ट्वा चन्द्रोपरि स्थितेषु त्रिषु वेष्टाङ्केषु ग्रथितान् प्रत्येकं षोडश वर्णान् पश्येत् । उक्तं हि सम्बरोत्तरे—

ककारादिदकारान्तं ङञवर्जं निवेशयेत् ।
धकारादिहकारान्तं आलिद्वयं समालिखेत् ।
मध्यस्थेन त्वकारालिर्न्यस्तव्यः शशिमण्डले ॥

इति । इहाप्युक्तं दिव्यमक्षरपङ्क्तिभिरिति । एवं नाभिमध्ये कमलकर्णिकारविसोमसंपुटगर्भे वीरं भावयन् भावनापरिपाकमधिमुच्य तस्मादेव द्वितीयसूक्ष्मरश्मिरेखाज्वलितैकज्वालावदवस्थितां पश्येत् । तस्याः प्रभावेन स्रवदमृतपूरस्रावितो वीरः सा च रश्मिरेखा सितीभवेत् । ततो वीरे नियमित[3]चित्तस्तं पश्येत् यावत् चेतसः स्थैर्य्यलाभं निमित्तैरुपलक्षयेत् । उपलक्षिते स्थैर्य्ये तस्या रश्मिरेखायाः स्फुटमालोकमनन्तं विश्वमवभासयन्तं

---

[1] A ०लून० । [2] AC ०मास्रु । [3] AC ०चित्तवत्तां ।

विचिन्त्य सर्व्वं करतलामलकवत् पश्येत्, सर्व्वसमाधींश्चाशु निष्पादयेत्।

इति बिन्दुयोगः।

जप्तविद्यस्य सिद्धिरिति जप उच्यते। तथैव षड्देवताचक्रं योगी नाभिकमलकर्णिकावस्थितरविसोमसम्पुटगर्भे चिरं विचिन्त्य तथैव च तद्रश्मिरेखाया वर्णावलीचयग्रथितया वेष्टचय[1]संयुते[2] मन्त्रं जपेत्। इह तन्त्रे त्र्यक्षरा मन्त्राः। तत्र भगवतो मन्त्रः, ॐ हुँ हुँ। बुद्धडाकिन्यादीनां यथाक्रमम्— ॐ ॐ हुँ, ॐ हुँ हुँ, ॐ स्वा हुँ, ॐ आ हुँ, ॐ [3]हा हुँ। कथं जपेत्? संपुटगर्भे जप्यं बीजाक्षरं विन्यस्य तच्छीर्षे वीरमुत्थाप्य ॐकारमुच्चारयन् वीराद् रश्मिरेखामुच्छ्वासवायुना सहोत्थाप्य तयावभास्य जगद् बुद्धमयं कुर्य्यात्। बीजाक्षरमुच्चारयन् तेषु सर्व्वबुद्धेषु स्वदेवतास्वभावतामधिमुञ्चेत्। अन्तर्हुँकारं उच्चारयन् निश्वासवायुना समाकृष्य तद्बुद्ध[4]मयं जगद् वीरे संहरेत्। एवं पुनः पुनः कुर्य्यात् यावत् खेदो न भवति। सति खेदे विश्रम्य सर्व्वमिदं कुशलमनुत्तरायै सम्यक्सम्बोधयेऽभिमतफलसिद्धये च परिणमय्य पूर्व्ववत् पूजां कृत्वा स्वहृद्बीजाक्षरे मण्डलमन्तर्भाव्य, तत उत्थाय स्वदेवतात्मकमात्मानमधिमुच्य सर्व्वं [5]कुर्व्वीत। सर्व्वं च भोज्यं पञ्चभिर्बीजैः पञ्चज्ञानामृतमयं कृत्वा स्वहृदये च देवताचक्रमधिमुच्य विचिन्त्य च तज्जिह्वासु तदमृतं जुहुयात्। स्नानं कुर्व्वन् देवताभि[6]षेकविधिं ध्यायात्।

---

[1] A ०वायदे०।
[2] A ०सम्पुटे।
[3] AC ह्वाः।
[4] AC बुद्ध०।
[5] AC कुर्व्वति।
[6] AC ०षेकैर्विदध्यात्।

मध्याह्नसायाह्नसन्ध्ययोस्तु मण्डलगृहं प्रविश्य स्वहृद्बीज-रश्मिभिराधारमण्डलं निर्म्माय त[स्मा]देव बीजात् चतस्रो योगिनीः क्रमेण संस्फार्य्य यथास्थानं निवेश्य पूर्व्ववद-भिषेकादिकं सर्व्वविधिमनुष्ठाय मण्डलमन्तर्भाव्य तत उत्थाय पूर्व्ववत् समाहितयोगं कुर्य्यात्। अर्द्धरात्रसन्ध्यायां त्वयं विशेषः— संपूज्यार्घ्यं दत्त्वा ॐ वज्रमुरिति ज्ञान-मण्डलमुत्सृज्य स्वज्ञानबीजे समयमण्डलमन्तर्भाव्य निराभासं सम्बोधिचित्तमधिमुच्य सुप्यात्। एवं दिना-न्तरेष्वपि देवीसङ्गीतिचोदनोत्थापितः सर्व्वं पूर्व्ववत् कुर्य्यात्। एवं प्रत्यहं यावत् सिद्धिनिमित्तानि लभते। तत्र मण्डलेश्वरस्य मन्त्रो लक्षजापेन सिध्यति, शेषानामयुत-जापेन। माला[1]मन्त्राश्च तन्त्रान्तरादानेतव्याः। तान् स्वहृत्सूर्य्ये हृच्चन्द्रे वा यथायोगं मण्डलीकृत्य प्रदीपमाला-वज्ज्वलतश्चेतसाऽभिलिख्य मनसा वाचयन्निव जपेदिति।

ब्रुवतैवं महामायासाधनं यन्मयार्ज्जितम्।
कुशलं तेन बुद्धः स्यां वशी[2] विश्वार्थसाधने॥

॥ महामायासाधनं समाप्तम्॥

---

[1] AC मन्त्रान्तरादौ नेतव्याः। [2] A स्याम्बरी।

240.

नमो वज्रडाकाय।

प्रथमं मुखशौचादिकं कृत्वा मृदुविष्टरोपविष्टः स्वहृदि सूर्य्यमण्डले हुँकारबीजं दृष्ट्वा पुरतः करुणाचलवज्रं वक्ष्यमाणकवर्णभुजायुधं विचिन्त्य पूजापापदेशनापुण्यानुमोदनापुण्यपरिणामनात्रिशरणगमनादिप्रणिधिं च कृत्वा स्वकायवाक्चित्ते नामाक्षरं भावयेत्। तच्च नामाक्षरम्—हे इति हेत्वपगताः सर्व्वधर्म्माः, ह इति हान्युत्पादिताः[1] सर्व्वधर्म्माः, ए इति पर्य्येषणविमुक्ताः सर्व्वधर्म्माः, रु[2] इति प्रतिश्रुतकोपमाः सर्व्वधर्म्माः, र इति रतिसमायुक्ताः सर्व्वधर्म्माः, उ इति उत्पादव्ययधर्म्मिणः सर्व्वधर्म्माः, क इति सर्व्वसौख्यसमायुक्ताः सर्व्वधर्म्माः, अ इति अकारो मुखं सर्व्वधर्म्माणामाद्यनुत्पन्नत्वात्। इति कृत्वा शून्यतां विभाव्य मन्त्रमुच्चारयेत्— ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। हुँकारेण विघ्नमुत्सार्य्य वज्रपञ्जरं विभाव्य श्मशानाष्टकमध्ये रक्तचतुर्द्दलकमलपद्मवरटकसूर्य्यमण्डले हुँकारबीजं दृष्ट्वा मैत्रीकरुणामुदितोपेक्षास्वभावात्मिकाश्चतुर्द्देव्यः सञ्चोदयन्ति श्रीवज्रगीत्या अभ्यन्तरसाधने—

[4]हले सहि विअसिअ कमलु पबोहिउ वज्जेँ।
अललललहो महासुहेण आरोहिउ नृत्येँ[5]॥

[1] N हानूत्पादावहिता, A हान्युत्पादवहिता।
[2] A नु।
[3] AN अत्यन्तभव०।
[4] छाया—
हले सखि ! विकसितं कमलं प्रबोधितं वज्रेण।
अललललहो महासुखेनारोपितो नृत्येन॥
रविकिरणेन प्रफुल्लं कमलं महासुखेन।
अललललहो महासुखेनारोपितो नृत्येन॥
[5] AN भृत्यं।

रविकिरणेण पफुल्लिअ कमलु महासुहेण ।
[अललललहो महासुहेण] आरोहिउ नृत्यें ॥
वज्रडाकिनीनृत्येन वज्रसत्त्वं निवेशयेत् ॥

इति गीतिसमनन्तरं माया[1]बद्धवस्तुसंवित्त्या मनसा हुँकारोद्भूतं करुणाचलवज्रं नीलपीतसितश्यामचतुर्मुखं चतुर्भुजं दक्षिणे भुजे कपालशरधरं वामे खट्वाङ्गधनुर्द्धरं रौद्रासनस्थं त्रिनेत्रं सार्द्रमुण्डस्रग्दाममालिनं कपालमालाभिः शिरसि भूषितं अस्थ्या[2]लङ्कारविभूषितं ईषद्दंष्ट्राकरालवदनं पिङ्गलोर्द्ध्वकेशं— काये चीं[3]कारं पीतं चक्षुषोः ॐकारं सितं श्रोत्रयोः हुँकारं रक्तं नासिकायां खकारं सितं कण्ठे आःकारं सितं हृदये रेफं रक्तं— षडङ्गन्यासलक्षितं स्वाभप्रज्ञालिङ्गितं व्योमावकाशिनं वज्रधराभिषेकिनं कायवाक्चित्ताधिष्ठितं सुविशुद्धधर्म्मधातुज्ञानस्वभावमात्मानं विभाव्य ; तत्र पूर्व्वदले वज्रडाकिनी नीलवर्णा नीलपीतरक्तश्यामचतुर्मुखा चतुर्भुजा वामभुजे खट्वाङ्ग[4]घण्टां दक्षिणे वज्रकपालहस्ता पृथिवीधात्वादर्शज्ञानस्वभावा, दक्षिणदले रत्नडाकिनी पीतवर्णा पीतनीलरक्तश्यामचतुर्मुखा चतुर्भुजा वामभुजे पताकां [5]कञ्चुकं च दक्षिणे त्रिशूलरत्नहस्ता अब्धातुसमताज्ञानस्वभावा, पश्चिमदले पद्मडाकिनी सितारुणवर्णा रक्तपीतनीलश्यामचतुर्मुखा चतुर्भुजा वामभुजे धनुःकपालं दक्षिणे शरविश्वपद्महस्ता तेजोधातुप्रत्यवेक्षणाज्ञानस्वभावा, उत्तरदले

---

[1] A ॰बद्धास्त्रसंविद्यां, C ॰बद्धास्तु संविद्य

[2] A त्र्यस्था॰ ।

[3] AC घी॰ ।

[4] A omits ॰घण्टां ।

[5] AN ॰जम्बूकञ्च ।

विश्वडाकिनी श्यामवर्णा श्यामपीतरक्तनीलचतुर्मुखा चतुर्भुजा वामभुजे पाशकपालं दक्षिणे [1]खट्वाङ्गडमरुहस्ता वायुधातुकृत्यानुष्ठानस्वभावा; देव्यः सर्व्वा रौद्रासनस्थाः कपालमाला[भि]: शिरसि विभूषिताः सार्द्रमुण्डस्रग्दाममालिन्यस्त्रिनेत्रा ईषद्दंष्ट्राकरालवदना ज्वलितोर्द्धपिङ्गलकेशाः स्फुरद्रश्मिमालिन्यः; एवं चतुर्देवीसमावृतमात्मानं करुणाचलवज्रं ध्यात्वा शिरसि हृदि नाभौ गुह्ये वायुमाहेन्द्रवरुणाग्निमण्डलेषु यथोपदेशं विभाव्य नपुंसकजापं कुर्य्यात् मन्त्री। खिन्ने सति मन्त्रजापं कृत्वा ॐ आः ह्रीँ हुँ फट् एवं भवसम[2]सर्व्वभावस्वभावमन्त्रसंस्थानधर्म्मात्मा योगी सर्व्वविषयादिकृत्यं कुर्य्यात् प्राकृतकल्पमुक्त[ये] इति।

॥ महामायासाधनोपायिका समाप्ता।

। कृतिरियं कुक्कुरिपादानामिति ॥

---

## 241.

नमो हेरुकाय।

पर्व्वतादौ ध्यानालये सुखासनोपविष्टो मैत्रीकरुणाशयः स्वहृदि विश्वकमलस्थ्यं नीलह्रीःकारस्फुरद्रश्मिकं विन्यस्य[4] तद्रश्मिसञ्चोदितगुरुबुद्धबोधिसत्त्वान् सम्पूज्य त्रिशरणगमनादिकं कुर्य्यात्। ततः सर्व्वधर्म्मान् स्वकायं च निःस्वभावतया व्यवलोक्य ॐ शून्यताज्ञानादिकं पठेत्। ततो ह्रीःकारनिष्पन्नं नीलकरालवज्रं [5]ह्रीःकाराधिष्ठित-

---

[1] N खड्ग०। [2] AC ०सर्वविभवे। [3] N ०कृपा०।
[4] AC विश्वस्य। [5] A ष्ठि०, C ष्ठौ०।

वरटके ध्यात्वा तत्सर्व्वपरिणतं नीलं नरचर्म्मभृतं कपाल-मालाक्षोभ्यालङ्कृतशिरस्कं ज्वलदूर्द्ध्वपिङ्गलकेशं रक्तवर्त्तु-लाक्षं अन्त्रसंग्रथितमुण्डमाला[1]वलम्बितं नरास्थिरचिता-भरणं द्विभुजैकमुखं दंष्ट्राकरालवदनं दक्षिणकरेण वज्र-धारिणं वामकरेण पूर्णकपालं वामस्कन्धासक्तचलद्घण्टिका-पताकानरशिरोविश्ववज्रालङ्कृतपञ्चसूचिक[2]वज्रशिखरमध एकसूचिकवज्राकारं यज्ञोपवीतवत्खट्वाङ्गं विश्वपद्मसूर्य्ये वामपादं तस्यैवोरौ दक्षिणचरणं विन्यस्य नृत्यं कुर्व्वन्तं हेरुकवीरं भावयेत्। ततस्तदाकारं ज्ञानसत्त्वं दृष्ट्वा तद्धृ-दयस्थह्रीःकाररश्मिभिर्ज्ञानसत्त्वहेरुकमानीय अर्घादिकं दत्त्वा आत्मन्यन्तर्भाव्य हृत्कण्ठमूर्ध्नि समयमुद्रया रक्षा-मधिष्ठापयेत्। तत्रेयं समयमुद्रा—वज्रमुष्टिद्वयं बद्ध्वा तर्ज्जनीभ्यां ग्रन्थिं ज्येष्ठाभ्यां मध्यमाभ्यां च यथाक्रममध ऊर्द्ध्वं सूचीकृत्वा शेषाङ्गुली ज्वालाकारेण स्थापयेत्। ततो भावनाखिन्नो जपेन्मन्त्रम्— ॐ हेरुक वज्रसमय ह्रीः सर्व्वसत्त्वदुष्टसमयमुद्राप्रभञ्जक हुँ फट्। ततो विसर्ज्जयेत्। श्मशानप्रवेशे वज्रमुष्टिद्वयं बद्ध्वा कनिष्ठाभ्यां शृङ्खलीकृत्वा तर्ज्जनीभ्यां सूचीकृत्वा ललाटे धारयन् मुद्रारश्मिनिर्यात-पीतसूक्ष्मवज्ररश्मिस्फुरणैः सर्व्वाङ्गमभिव्याप्य कायवाक्-चित्तं ध्यात्वा पूर्व्वोक्तमन्त्रं जपेत्। श्मशानं प्रविशेत्, अभेद्या रक्षा भवति।

॥ संक्षेपतो हेरुकसाधनं समाप्तम् ॥

---

[1] AC ०रचितं। [2] MSS ०सूक०।

## 242.

आकाशलक्षणं सर्व्वमाकाशं चाप्यलक्षणम् ।
मायोपमं च [1]सर्व्वं वै त्रैधातुकमशेषतः ॥
दृश्यते स्पृश्यते चैव यथा माया हि सर्व्वतः ।
न चोपलभ्यते चैव सर्व्वस्य जगतः स्थितिः ॥

इत्यर्थं मनसाधिमुच्य एकानेकवियोगात् स्वशरीरं च सकलं च नीलादिवस्तुजातं शून्यमाकलय्य, स्वचित्तं मनोविज्ञानाख्यमनन्तरमकारं सूक्ष्मं [2]निस्तरङ्गमप्रति[3]घं निरुपमवर्णसंस्थानं भ्रान्तिम[द]प्युपकारा[य]यचाभ्यन्तर[4]निवृत्तये इत्यारोप्य, लक्ष्यस्थिरीकरणार्थं खद्योताकारमधिमुच्य, तच्च शून्यताकरुणागर्भं सकलकलापरिपूर्णचन्द्रमण्डलाकारं विचिन्तयेत् । एतस्मिन् चन्द्रमण्डले उपचितपुण्यसम्भारलक्षणे उपचितज्ञानसम्भारलक्षणं ह्रीःकारं नीलवर्णं [5]पश्येत्, तत्परिणतं च नीलज्वालावज्रमादर्शज्ञानस्वभावं चिन्तयेत्, चन्द्रवज्राकारपरिणतं जिननिवहमन्यूद्भवश्रीकरुणाचलक्रोधं हेरुकाख्यमात्मानं विभावयेत्, अधोमुखस्य शवस्योपरि विश्वपद्मं तस्योपरि सूर्य्यमण्डलं तन्मध्ये समुपविष्टं एकस्योर्द्ध्वभुजद्वयं इति वचनात् अर्द्धपर्य्यङ्किनं भस्मोद्धूलितरक्तप्रभामालिनं पिङ्गलोर्द्ध्वकेशं अक्षोभ्याद्यलङ्कृतकपालमालामुकुटिनं दक्षिणकरेण त्रिपताकागृहीतनील[6]करालवज्रं वामस्कन्धावसक्तवज्रखट्वाङ्गं रक्तपरिपूर्णकपालवामकरं सार्द्रनरमस्तकमालाकृतस्रग्दामदंष्ट्रा-

---

[1] AC सर्व्वत्र ।
[2] AC ०रंसु० ।
[3] A घ्नं ।
[4] AC निचि० ।
[5] C न्यस्येत् ।
[6] C ०कपाल० ।

करालवदनं चलद्वर्त्तुलाकाररक्ताक्षं सविभ्रमभ्रूकुटिनं परमार्थतो वाच्यं विचारशून्यत्वात्, संवृत्या स्वप्नसौदामिनीगन्धर्व्वनगरच्छायामायोपमं चतुर्म्मुद्रामुद्रितम् स्वेष्टदेवताविग्रहः सर्व्वसिद्धिप्रदो भवति— महामुद्रा समयमुद्रा धर्म्ममुद्रा कर्म्ममुद्रा। स्वहृदि चन्द्रमण्डलस्योपरि वज्रं विभाव्य पञ्चसूचिकं वर्णभुजसंस्थानोपेतं चिह्नसहितं श्रीहेरुकमात्मानं विभावयेत् इति महामुद्रा। तथैव स्वहृदि चन्द्रवज्रं विभाव्य वज्राञ्जलिं मूर्ध्नि विकचां बद्ध्वा तर्ज्जनीद्वयं कुण्डाकारेणावस्थाप्य [1]अङ्गुष्ठद्वयं पार्श्वद्वयेन भग्नं कुर्य्यात्— समयमुद्रा। जिह्वायां चन्द्रमण्डलस्योपरि शुक्लं वज्रं विन्यस्य मन्त्रमुच्चारयेत्, ॐ सुभगे त्वमहं देवि हिरि सिरि तिरिणि प्रिये— धर्म्ममुद्रा। स्वहृदि चन्द्रमण्डलस्योपरि आःकारनिर्य्यातविश्ववज्रं विचिन्त्य तलवज्रबन्धं बद्ध्वाऽङ्गुष्ठद्वयेन तर्ज्जनीद्वयमाच्छाद्य भग्नं कुर्य्यात्— कपालमुद्रेयं भगवतः कर्म्ममुद्रा। ॐ श्रीहेरुकवज्र समयमुद्रा ह्रीः सर्व्वदुष्टमुद्राप्रभञ्जक हुँ [2]रुलु [2]रुलु स्वाहा हुँ फट्।

इति साधनविधिरयं भगवतः संक्षिप्तो [वि]हितः कल्याणगर्भेणातिविस्तरभीरुणा।

॥ श्रीहेरुकसाधनम् ॥

---

[1] AC अङ्गुष्ठद्वयेन। [2] C चुलु।

## 243.

श्रीहेरुको जगन्नाथो भूत्वा सर्व्वार्थसम्पदः ।
कुर्य्यात् जगद्धितार्थायेत्येवमादौ विभावयेत् ॥
[1]च्यस्त्रधर्म्मोदयान्तःस्थकूटागारोदयाश्रया ।
विश्ववर्णाब्ज[2]सच्चन्द्रे वज्रासनशशिप्रभम् ॥
स्फटिकेन्द्वङ्गमूलास्थनीलसव्यारुणेतरम् ।
स्वाभप्रज्ञाश्लेषिकण्ठं वज्रासिमणिपद्मिनम् ॥
वज्रसत्त्वं विभाव्यैवं[3] स्वचित्तं च्यक्षरीकृतम् ।
तद्धक्रेणाब्जसंविष्टं सर्व्वरागाग्निना द्रुतम् ॥
लोचनादिस्वसङ्गीत्या दुर्द्दृष्ट्यार्थाय चोदितम् ।
प्रलयाग्निमहाज्वालावज्रह्रीःकारसम्भवम् ॥
तदुद्भवं कृपाक्रोधं महाभैरवदामकम् ।
भ्रूभङ्गोर्द्ध्वज्वलत्केशं नीलदंष्ट्रान्वितं सितम् ॥
[4]सव्येतरे[5] [तु] रक्तं च भस्मोद्धूलितविग्रहम् ।
स्वाभाङ्गना भुजैः श्लेषि रौद्रादि[6]षड्रसान्वितम् ॥
कृष्णव[7]ज्रासिखट्वाङ्गमणिराजकरग्रहम् ।
नृकरङ्कशिरोमालास[8]दस्त्राभरणप्रियम् ॥
दक्षिणाङ्घ्रितलाक्रान्तं वामोरुतलपीडनम् ।
रौद्रासनं समास्थाय हेरुकं स्वं प्रभावयेत् ॥

---

1 AN अप्र० ।
2 AC प्रावच० ।
3 AN ०व्यैनं ।
4 A omits this and the next line.
5 N सर्व्वोत्तरा ।
6 N ०नद्र० ।
7 AC ०चादि० ।
8 C ०दस्था० ।

सम्बुद्धेन्द्रिय[1]सद्योगकायवाक्चित्तत्र्यक्षरम्।
हृज्ज्ञानसत्त्वमक्षोभ्यमौलिनं रत्नशालिनम्॥
परमानन्दसुखास्वादस्फुरत्संहाररूपिणम्।
सञ्चिन्त्य ज्ञानसौन्दर्य्यं योगी योगं समाप्नुयात्॥

॥ श्रीहेरुकसाधनम्॥

---

244.

श्मशानाष्टकमध्यस्थो निःसङ्गो हृष्टमानसः।
प्रज्ञोपायविधानेन चन्द्रसूर्य्यप्रयोगतः॥
आलिकालिसमायोगात् भावयेत् सूर्य्यमण्डलम्।
तत्र हुँकारसम्भूतं वज्रशूकसमन्वितम्॥
शवस्थमर्द्धपर्य्यङ्कं नरचर्म्मसुवाससम्।
भस्मोद्धूलितगात्रं च [2]स्फुरद्वज्रं च दक्षिणम्॥
चलत्पताकाखट्वाङ्गं वामे रक्तकरोटकम्।
शतार्द्धमुण्डमालाभिः कृतहारमनोरमम्॥
ईषद्दंष्ट्राकरालास्यं रक्तनेत्रं विलासिनम्।
पिङ्गोर्द्धकेशमक्षोभ्यमकुटं कर्णकुण्डलम्॥
अस्थ्याभरणशोभं तु शिरःपञ्चकपालकम्।
बुद्धत्वदायिनं ध्यायात् जगन्मारनिवारणम्॥

मन्त्रः— ॐ हुँ फट् स्वाहा।

॥ इति संक्षिप्तद्विभुजहेरुकसाधनम्॥

---

[1] AN संयोग०। [2] Omitted in A.

245.

प्रणम्य श्रीगुरुं नाथं[1] त्रैलोक्याक्षेपहेरुकम् ।
तत्साधनविधिः शान्तिपादोक्तः प्रविभज्यते ॥
द्विभुजैकमुखं वीरं नैरात्म्याश्लिष्टकन्धरम् ।
चक्रा[2]द्याभरणैर्युक्तं त्रिनेत्रं [3]द्यङ्घ्रिराजितम् ॥

इह तन्त्रे भावनाधिकृतो योगी प्रभाते शयनादुत्थाय स्वहृदये सूर्य्यस्थहुँकारं दृष्ट्वा तद्रश्मिभिः श्रीहेरुकमवभास्यानीय पुष्पादिपञ्चोपचारेण सम्पूज्य तस्याग्रतः पापदेशनापुण्यानुमोदनात्रिशरणगमनं च कृत्वा महाबोधिचित्तमुत्पाद्य सर्व्वसत्त्वेषु दिव्यसुखोपसं[4]हाराकारां मैत्रीं सर्व्वदुःखापहाराकारां करुणां तत्सुखाविच्छेदनियमाकारां मुदितां क्लेशोपक्लेशग्राह्यग्राहकाद्यमनसिकारलक्षणामुपेक्षां च भावयेत् । ततो धर्म्मपुद्गलादिविकल्पकलङ्कवर्ज्जितरूपां शरन्निर्म्मलमध्याह्ननभोनिभां अद्वयज्ञानैकरूपां शून्यतां विभाव्य ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमित्यधितिष्ठेत् । ततो विबुद्ध्य नभोदेशे सूर्य्यमण्डलस्थहुँकारं [5]दृष्ट्वा तत्परिणतवज्रवरटकस्थहुँकारं पश्येत् । तत्किरणविनिर्गतैः श्रीहेरुकरूपैः सकलजगदर्थं कृत्वा तत्रैव प्रवेश्य तत्परिणतं श्रीहेरुकं विश्वदलकमलस्थितं शवो[6]परि सूर्य्यमण्डलस्थं द्विभुजं त्रिनेत्रं दक्षिणकरे वज्रं वामे वज्राङ्कितकपालधरं सताण्डवं व्याघ्रचर्म्मनिवसनं

---

[1] Omitted in B.
[2] AC ०घात० ।
[3] ANC व्याघ्रराजकं ।
[4] AC ०हारं मै० ।
[5] C omits दृष्ट्वा...ऊँकारं ।
[6] AC सर्व्वो० ।

शिरस्यक्षो[1]भ्यात्मकनरशिरोघटितचक्रीधरं कर्णे अमिताभात्मकनरास्थिकुण्डलिनं कण्ठे रत्नसम्भवात्मककण्ठिकायुक्तं हस्ते वैरोचनात्मकरुचकधरं कट्याममोघसिद्ध्यात्मकमेखलायुक्तं केशयज्ञोपवीतकेयूरनूपुरैर्युक्तं ऊर्द्धपिङ्गलकेशं द्विभुजैकमुखया कर्त्तिकपालधारिण्या नैरात्म्ययाऽऽलिङ्गितं एवम्भूतमात्मानं विभाव्य, ततोऽस्य श्रोत्रे नैरात्म्यां चक्षुषि वज्रां घ्राणे गुप्तगौरीं जिह्वायां वारियोगिनीं कायेन्द्रिये वज्रडाकिनीं मनसि नैरात्म्यामधिमुञ्चेत् । ततः शिरसि द्वात्रिंशद्दलकमलोपरि अधोमुखं हँकारं कण्ठे षोडशदलकमलोपरि ऊर्द्धमुखमोँकारं हृदये अष्टदलकमलोपरि अधोमुखं [2]हुँकारं नाभौ चतुःषष्टिदलकमलोपरि ऊर्द्धमुखमँकारं चिन्तयेत् । ततः समयसत्त्वसदृशं ज्ञानसत्त्वमानीय जः हुँ वँ होरित्यनेन मन्त्रेणाकृष्य प्रवेश्य बद्ध्वा वशीकृत्य क्षीरोदकवत् [3]समरसीकुर्य्यात् । तदनन्तरं स्वहृत्सूर्य्यवज्रवरटकस्थहुँकाररश्मीन् निश्चार्य्य तत्किरणैः सर्व्वतथागतस्वभावहेरु[4]कमानीय पूजां कृत्वा अभिषिञ्चन्तु मां सर्व्वतथागता इति प्रार्थयेत् । तैः पञ्चामृतपूर्णमणिकलशैरभिषिक्तमात्मानं अक्षोभ्यनाथमुकुटिनं ध्यायात् । ततः सर्व्वयोगिनीवृन्देन स्वस्वबोधिचित्तादिद्रव्येन पूजां कुर्य्यात् । ततः—

दंष्ट्रोत्कटमहाभीममुण्डस्रग्दामभूषितम् ।
भक्षमाणं महामांसं श्रीहेरुकं नमाम्यहम् ॥

---

[1] B ०भ्यामेक० ।　　[2] B हूँ० ।
[3] AC मनसि ।　　[4] AN ०कानानी० ।

इत्यनेन [1]स्तुतिं कुर्य्यात्। ततो नभसि हुँकारपरिणतं वज्रं तदध आःकारपरिणतं पद्मभाजनं तन्मध्ये ॐका-राङ्कितानि गोकुटदहनमारमुण्ड[2]विद्राविसमयवस्तूनि वज्रपद्मसमायोगादग्निज्वालनं तेन[3] द्रव्यानां तापनं पाकात् द्रवीकृत्य सर्व्वतथागतरूपदर्शकज्ञानसूर्य्यकिरणं तज्ज्ञानबीजकिरणेभ्यः सर्व्वतथागतज्ञानामृतमाकृष्य तैर्व्व-स्तुभिः सहैकीकृत्य ॐ आः हुँ इति [4]त्र्यक्षरेणाधिष्ठाय शुक्लहुँकारजां वज्रमयीं जिह्वां कृत्वा आत्मानं तेन प्रीणयेत्। ततो हृत्सूर्य्यमण्डलवज्रवरटके हुँकारं संवेष्ट्य स्थितां ॐ त्रैलोक्याक्षेप हुँ हुँ हुँ फट् स्वाहा इति द्वाद-शाक्षरमन्त्रमालां प्रदीपमालामिव ज्वलन्तीं मनसाऽभि-लिख्य क्रमात् वाचयन्निव निभृतं जपेत्। मध्याह्नसायाह्न-सन्ध्ययोस्तु झटिति श्रीहेरुकरूपमात्मानं आरचय्य ततश्चक्षुरादिविशुद्धिश्चतुश्चक्रभावनापूजास्तुत्यमृतास्वाद-जपादिकं कुर्य्यात्।

त्रैलोक्याक्षेपवीरस्य कृत्वा साधनमुत्तमम्।
यत् पुण्यमर्ज्जितं तेन जनः सर्व्वोऽस्तु वज्रधृक्॥

॥ द्विभुज[5]हेरुकसाधनम्॥

---

[1] N स्तूयात्।
[2] AC ०विभावि०।
[3] Omitted in AC.
[4] AC अक्षर०।
[5] Na ०वज्रहे०।

246.

झटिति हेरुकं सप्रज्ञं विभाव्य तद्धृदये रक्ताष्टदलकमलं विचिन्तयेत्। तस्य पूर्व्वदक्षिणपश्चिमोत्तरेषु यथाक्रमं अ क च ट तथाग्नेयनैर्ऋति[1]वायव्यैशानदलेषु त प य स मध्यवरटके पूर्व्वे स्वा मध्ये ॐ पश्चिमे हा। सर्व्वाणीमानि [2]सूर्य्यमण्डलस्थानि रक्तवर्णानि। एषां चाङ्कुशाकारा रश्मयो रोमकूपेभ्यो निर्गत्य साध्यानाकृष्य साधकस्य पादयोः पातयित्वा एष्वेव प्रविशन्तीति।

आम्नायः।

वरगुरुचरणं नत्वा शास्तारं सकल[3]शास्त्रदातारम्।
वक्ष्ये सिद्धाम्नायं नगरक्षोभस्य मन्त्रराजोऽहम्॥
सम्यक्कृतत्त्वमनस्को गुरुभक्तः स्वाधिदैवताभिरतः।
निशि पर्य्यटनविधिज्ञो निःशङ्कः साधयेन्मन्त्रम्॥
हृदि [4]पङ्कजाष्टदलके द्विचतुष्कं व्यञ्जनं स्वरांशुयुतम्।
वरटकमध्ये प्रणवं पूजाक्षरसंयुतं रक्तम्॥
तरुतृणव[5]र्णान् पार्व्वतपुरपौरानर्कसन्निभान् मन्त्री।
ध्यायन् प्रणतानात्म[6]नि विंशत्यङ्गं जपेदयुतम्॥
इति विहितपूर्व्वसेवो गणवरचक्रं शवालये कुर्य्यात्।
आज्ञां प्रमृश्य तेभ्यः सिद्धिवरं चाशु सिद्ध्यर्थम्॥
कतिचित् पदानि गत्वा सम्पूर्य्य चिकं शुभं तु मामक्याः।
कृत्वा पादतले तत् संस्पृश्य स्वपेदुत्थानम्॥

---

[1] ANC ०ऋत्य०। [2] A सुम०।
[3] A ०शास्त्रदानं, N ०गीतदातारं। [4] AC पँकारजा०।
[5] AC ०र्णापचित०। [6] AC ०णतात्म०।

पूर्व्वशिरः संजप्यायुतमेकं संपिबेत् तमुत्थाय ।
सकृदप्येव समस्तं गच्छेत् गगनमण्डलं[1] तदनु ॥
निविशेत् यस्मिन् देशे पुनरयुतं संजपेद् विवरयोगम् ।
एवं कृतवरयोगो हेवज्रसमो जगति सम्पूज्यः ॥

पुरक्षोभोपदेशः ।

अकचटतपयसशब्देन आलिकालिं नीतार्थैनोक्ता ।
आलिकालिजापेन त्रैलोक्यं क्षोभयेन्मन्त्री ॥

लक्षजापेन । किं पुनरेकमात्रमिति ? आलिकालि उच्यते— तद्यथा, अ आ इ ई ऋ ॠ उ ऊ ऌ ॡ अ आ ए ऐ अर् आर् ओ औ अल् आल् ह हा य या र रा व वा ल ला इति सृष्टिक्रमेणालिजापः श्वासप्रवेशेन ।

श्वासनिर्गमे कालिः— क का ख खा ग गा घ घा ङ ङा च चा छ छा ज जा झ झा ञ ञा ट टा ठ ठा ड डा ढ ढा ण णा प पा फ फा ब बा भ भा म मा त ता थ था द दा ध धा न ना स सा [2]ह्य ह्या ष षा श शा क्ष क्षा इति। आदौ ॐकारं दत्त्वा क्षोभणे आकृष्टावन्ते वौषट् प्रदेयम्। एवं पुरक्षोभमन्त्रः। इति कालचक्रे निबद्धम्।

॥ [ पुरक्षोभविधिः ] ॥

---

[1] AC ०तलं ।    [2] A द्य द्या, C ह्व ह्वा ।

## 247.

**प्रणम्य नाथं हेवज्रं सर्व्वधर्म्मैकसंवरम्।**
**संगृह्यते यथाम्नायं बाह्यपूजाविधिर्म्मया॥**

ततः श्रीहेवज्रयोगवान् मन्त्री प्रत्यूषे यथावसरं वा कृतसम्मार्ज्जनादिके भूभागे हस्तं दत्त्वा ॐ रक्ष रक्ष हुँ हुँ फट् स्वाहा इति [1]भूमिमधिष्ठाय तत्र पञ्चामृतसुगन्धादिवटिकया तत्तद्भूम्यधिमोक्षपूर्व्वकं पीठोपपीठक्षेत्रोपक्षेत्रछन्दोपच्छन्दमेलापकोपमेलापकपी[2]लवोपपील-च[3]श्मशानोपश्मशान इत्युच्चारयन् चतुरस्रं मण्डल[4]-मुपलिप्य ॐ वज्ररेखे हुँ इत्यभिमन्त्र्य हृद्वज्रकिरणाकृष्टं भगवन्तं समण्डलं सर्व्ववीरवीरेश्वरीसङ्घरूपं तत्रारोप्य अर्घ्यपाद्यादिदानपूर्व्वकमष्टमातृभिः सम्पूज्य हुँकारजं तदभिमन्त्रितपुष्पादिकं तस्मै दद्यात्। तत्र त्र्यक्षर-हृदयोपहृदयमन्त्रैर्भगवते स्वमन्त्राभ्यां भगवत्यै। ॐ गौरि हुँ हुँ हुँ फट् स्वाहा। ॐ चौरि हुँ हुँ हुँ फट् स्वाहा। ॐ वेतालि हुँ हुँ हुँ फट् स्वाहा। ॐ घस्मरि हुँ हुँ हुँ फट् स्वाहा। ॐ पुक्कसि हुँ हुँ हुँ फट् स्वाहा। ॐ शबरि हुँ हुँ हुँ फट् स्वाहा। ॐ चण्डालि हुँ हुँ हुँ फट् स्वाहा। ॐ डोम्बि हुँ हुँ हुँ फट् स्वाहा। इति मन्त्रैर्यथास्थानं गौर्य्यादीनां ततो बाह्यादिसर्व्वपूजादिभिः सम्पूज्य त्र्यक्षरवर्ज्जितपुष्पदानमन्त्रैः। ॐ अष्टाननाय हुँ हुँ हुँ फट् स्वाहा। ॐ पिङ्गलोर्द्ध्वकेशवत्मले हुँ हुँ हुँ फट् स्वाहा। ॐ चतुर्विंशतिनेत्राय हुँ हुँ हुँ

---

[1] AC भूम्यधि०।
[2] C ०लवो०।
[3] C ०लव०।
[4] AN ०लं सुलि०।

फट् स्वाहा। ॐ षोडशभुजाय हुँ हुँ हुँ फट् स्वाहा। ॐ कृष्णजीमूतवपुषे हुँ हुँ हुँ फट् स्वाहा। ॐ कपालमालाधारिणे हुँ हुँ हुँ फट् स्वाहा। ॐ [1]आध्मातक्रूरचित्ताय हुँ हुँ हुँ फट् स्वाहा। ॐ [2]अर्द्धदंष्ट्रिणे हुँ हुँ हुँ फट् स्वाहा। इति मन्त्रैश्च संस्तुत्य यथायोगमन्यत् स्तुतिप्रणिधानादिकं च कृत्वा शताक्षरमन्त्रेण दृढीकुर्य्यात्। मन्त्रः— ॐ वज्रसत्त्व समयमनुपालय वज्रसत्त्वत्वेनोपतिष्ठ दृढो मे भव सुपोष्यो मे भव सुतोष्यो मे भव अनुरक्तो मे भव सर्व्वसिद्धिं मे प्रयच्छ सर्व्वकर्म्मसु च मे चित्तं श्रेयः कुरु हुँ हहहह होः भगवन् सर्व्वतथागतवज्र मा मे मुञ्च वज्रीभव महासमयसत्त्व आः इति। ततः—

कृतो वः सर्व्वसत्त्वार्थः सिद्धिर्दत्ता यथानुगा।
गच्छध्वं बुद्धविषयं पुनरागमनाय मुः॥

इति विसर्ज्य चक्रमात्मन्यन्तर्भाव्य रेखालोपादिकं कुर्य्यात्। नैरात्म्यापूजनमपि तथैव मण्डलकमुपलिप्यारोप्य च मण्डलचक्रं त्र्यक्षरस्वहृन्मालामन्त्रेण [3]नायिकायै अन्यासां [4]प्रणवस्वाहाविदर्भितस्वबीजमन्त्रैः पुष्पादिकं यथास्थानं दत्त्वा त्र्यक्षररहितपुष्पदानमन्त्रैः स्तुतिं च कुर्य्यात्। शेषं पूर्व्ववदिति।

बाह्यपूजाविधेः सूत्यै संग्रहाद् यन्मयार्ज्जितम्।
पुण्यं तेनास्तु लोकोऽयं सत्पूजाभाजनं परम्॥

॥ पूजाविधिसंग्रहः समाप्तः॥

---

[1] AC अध्मातकुरु०। [2] C अर्द्धेन्दु०।
[3] A नापि कार्य्यं। [4] C प्रवण०।

248.

वज्रडाकं नमस्कृत्य महामायात्मकं जिनम्।
आम्नायसङ्गतस्तस्य [1]सूच्यते साधनक्रमः॥
आदौ[2] मैत्रीकृपायोगात्[3] संबोधौ कृतमानसः।
दानशीलादियुक्तोऽष्टलोकधर्म्मैः समाशयः॥
मन्त्रतन्त्रादिसिद्धिज्ञो योगाचारक्षमः[4] क्वचित्।
स्थाने सुखोपविष्टः सन् हृत्सूर्य्ये न्यस्तहुँकृतिः॥
तत्प्रभोद्भवपूजाभिः सम्पूज्य पुरतो धियम्।
कृत्वार्घ्यदेशनाद्यं तु शून्यतां भावयेत् ततः॥
ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति मनसा पठेत्।
व्योम्नि रक्तचतुष्पत्रपद्मस्थे सूर्य्यमण्डले।
पञ्च बिन्दून् सितान् ध्यात्वा स्फुरत्संहारकारकान्[5]॥
[6]चतुर्द्दिक्षु बिन्दुसम्भूता नृत्यन्त्यः सङ्गमोत्सुकाः।
पूर्व्वाभ्यस्तमहामैत्रीकरुणादिस्वभाविकाः॥
चतस्रोऽपि च डाकिन्यश्चोदयन्तीति चिन्तयेत्।
[7]हले सहि विअसिअ कमलु पबोहिउ वज्जें[8]॥
अललललहो महासुहेण आरोहिउ [9]नृत्यें।
रविकिरण पफुल्लिउ कमलु महासुहेण॥

---

[1] AC मुच्य॰।
[2] AC आद्वौच।
[3] AC ॰योगं।
[4] AN ॰क्षमे।
[5] AC ॰वान्।
[6] A चतुर्भिर्विन्दु, N चतुर्द्दिग्बिन्दु॰।
[7] छाया—

हले सखि! विकसितं कमलं प्रबोधितं वज्रेण।
अललललहो महासुखेनारोपितो नृत्येन॥
रविकिरणैः प्रफुल्लं कमलं महासुखेन।

[8] C वज्जं।
[9] C नृत्ये, AN नृत्येन।

ततः संसारदुःखेभ्यः सत्त्वाभ्युद्धरणाशयः[1] ।
मायोपमं जगत्तत्त्वं यथाभूतं विलोक्य सः ॥
[2]मध्यबिन्दूद्भवं नीलं हुँबीजात् [3]करुणामयम् ।
पञ्चज्ञानत्रिकायात्मपरमानन्दसुन्दरम् ॥
चतुर्म्मुखं चतुर्बाहुं भस्मोद्धूलितमस्य च ।
मूलं शरीरवन्नीलं मुखं पीतं तु दक्षिणम् ॥
पृष्ठतः सितरक्ताभं वा[4]मं मरकतोज्ज्वलम् ।
त्रिनेत्रं नरचर्म्मादिमुद्रापञ्चकभूषितम् ॥
पिङ्गोर्द्धमूर्द्धजा[5]श्लेष्यं कपालमुकुटोत्कटम् ।
कपाल[6]पाणिनं सव्ये वामे खट्वाङ्गचापिनम् ।
रश्मिकोटिस्फुरच्चित्रबुद्धैः कृतजगद्धितम् ॥
स्वाभया बुद्धडाकिन्या संश्लिष्टं वा रतोत्सवे ।
नृत्यन्तं हेरुकं [7]ध्यायात् चतुर्दैवीक्षिताननम् ॥

डाकिनीनां चतुर्द्दिक्षु चिह्नादिकमुच्यते —

तत्र पूर्व्वदले वज्रडाकिनी नीलवर्णिका ।
नीलपीतसितारक्तहरितास्यचतुष्टया ॥
पृथिव्यादर्शज्ञानादि शुद्धवज्रं कपालकम् ।
सव्ये दधाति वामे तु घण्टाखट्वाङ्गधारिका ॥
दक्षिणे समताज्ञानतोयधात्वभिरूपिका ।
श्रीरत्नडाकिनी रत्न[8]च्छटात्रिशूलहस्तिका ॥
वामे निपीडितग्रीव[9]श्रीवज्रसत्त्वडाकिका ।

---

[1] AN ०नुद्ध० ।
[2] AC मध्ये चन्द्रो० ।
[3] A करमयं ।
[4] A ०भद्रा० ।
[5] AC पिङ्गलोर्द्धजा० ।
[6] A ०माली, C ०मालिनं ।
[7] AC ध्यात्वा ।
[8] AC ०च्छत्र० ।
[9] C जम्बुकसत्व० ।

पीतनीलसितारक्तहरिताभचतुर्म्मुखी ॥
पश्चिमे तु दले पद्मडाकिनी धवलारुणा ।
स्यात् तेजःप्रत्यवेक्षादिस्वभावा नव[1]यौवना ॥
सितारुणद्रुतस्वर्णनीलहरितनिभानना ।
विश्वपद्मं शरं सव्ये कपालं धनुरन्यतः ॥
उत्तरे तु हरित्पीतशुक्लरक्तसितानना ।
कृत्वानुष्ठान[2]वाद्यादिविशुद्धा विश्वडाकिनी ॥
[3]खट्वाङ्गडमरुकं सव्ये वामे पाशं कपालकम् ।
सचिनेचाश्चतुर्वक्त्राः सर्व्वा देव्यश्चतुर्भुजाः ॥
शृङ्गारादिरसासक्ता लक्षणव्यञ्जनोज्ज्वलाः ।
रौद्रासनस्था नृत्यन्त्यो नाथाभा मुद्रिकादिभिः ॥
कुर्य्यात् षडङ्गविन्यासं नाथस्यावाहनादिकम् ।
अभिषेकं जिनैः पूजां स्तुत्यनुरागनादिकम् ॥
ललाटकण्ठयोश्चक्षुःश्रोत्रघ्राणे हृदि न्यसेत् ।
ॐ आः ख[4] चि र इत्येवं रेफादूर्द्धं च हुँकृतिः ॥
वज्रच्छटासमायोगैरानीय ज्ञानमण्डलम् ।
अर्घदानादिपूर्व्वं च प्रविश्यैकीकुर्य्यात् स्वयम् ॥
सार्द्धं समयचक्रेण विशिष्टफलसिद्धये ।
रसप्रवेशात् ताम्रादिरजतीभावसिद्धवत् ॥
सञ्चोद्य दिग्गतान् नाथान् हृदयस्थहृदर्च्चिषा ।
तत्प्रभोद्भवविद्याभिर्धृतकुम्भामृताम्बुधिः ॥
अभिषेकात् प्र[5]भोमौलोवक्षोभ्यो दिव्ययोषिताम् ।
पुनः शाश्वतरत्नेशामिताभामोघसिद्धयः ॥

---

[1] AN ०वान्नव० । [2] AC ०वाद्या० । [3] AC खड्ग० ।
[4] 4 चित । [5] C ०भोमा० ।

समाध्युत्सृष्टदेवीभिः[1] सत्पूजाव्यग्रपाणिभिः ।
पूजयेद् योगिनीयुक्तमात्मानं हेरुकं स्तुयात् ॥
दंष्ट्रोत्कटमहाभीममुण्डस्रग्दामभूषितम् ।
भक्षमाणं महामांसं श्रीहेरुकं नमाम्यहम् ॥

इति स्तुतिः ।

शिरोहृन्नाभिगुह्येऽस्य ऊरुयुग्मादिके क्रमात् ।
ॐ हुँ स्वा आ हा बीजं ध्यात्वा पञ्चकुलात्मिकाम् ॥
ह्रीःकार[2]रक्तगुह्याब्जां भ्रूँभूतपीतकर्णिकाम् ।
श्रीबुद्धडाकिनीं स्वाभां वीक्ष्य रक्तां रतोत्सुकाम् ॥
गीत्या सञ्चोद्यमानः सन् चतुर्देवीभिराज्ञया ।
ॐजातमणिहुँवज्रविचित्रकरणादिभिः ॥
जिनाननुरागयामीत्यारभेत् रतिचिन्तया ।
वज्राब्जस्फारफट्शब्दैरानीयास्ये प्रवेशितम् ॥
जिनवृन्दं सुखावेशात् द्रुतं वज्रविनिर्गतम् ।
पद्मे [3]सच्चित्तमासाद्य जिह्वया विधिवत् ततः ॥
चतुर्भूतस्वभावे हृद्रक्त[4]पद्मे चतुर्दले ।
सूर्य्यस्थबिन्दुच[5]न्द्रेन सम्पुटितः सुवेष्टितः ॥
मृणालसूत्रोपमसार्द्ध[6]सप्त-
रेखाभि[7]राप्ताक्षरपङ्क्तिभिः सः ।
निश्चार्य्य नादं तत ऊर्द्धमिन्दु-
च्छिद्रे प्रवेश्यानुगमागमः स्यात् ॥

---

[1] N सन् ।
[2] A ०रक्त० ।
[3] AC सचि० ।
[4] AC उक्त० ।
[5] AC ०न्द्रस्व० ।
[6] A omits ०सप्त० ।
[7] AC ०रच्चर० ।

उच्चारयन् [1]स्फुरत्प्राणैर्मन्त्रमायामलङ्कृतम्।
त्र्यक्षरं च तथा कुर्य्यात् नादप्रवेशनिर्गमौ॥

ऊर्द्धं निर्गच्छति वायौ त्र्यक्षरध्वनिर्निर्गच्छति, प्रविशति सति प्रविशति, तिष्ठति सति वायौ सूक्ष्मासितबिन्दुमध्ये तिष्ठति। एवं ग्रथितस्वरव्यञ्जना सार्द्धसप्तगुणरेखा प्रवेशस्थितिनिर्गमा। मन्दं मन्दमन्यत्रागता [2]परा चित्तेन निध्येया। ॐ आः हुँ इति त्र्यक्षरजप्यमन्त्रः।

उत्थातुकामः पूजाद्यं कृत्वा दृष्ट्वा च दुःखितम्।
जगत्तत्त्वदृशामुक्तं कुशलं परिणामयेत्॥
यन्मयोपचितं पुण्यं वज्रडाकस्य भावनात्।
तेनाहं वज्रडाकः स्यां जगन्नाथपदाप्तये॥
उत्थाय पिण्ड[3]पातादिश्[4]तव्याख्यादिकां क्रियाम्।
स्वपरहेरुकाकारो मायाकार इवाचरेत्॥
हुँकाराधिष्ठितं भोज्यं [5]आःकारजकपालगम्।
अधोवाय्वग्निचक्रेण[6] ज्वालितं निर्म्मलीकृतम्॥
ऊर्द्धमोँकारमाचिन्त्य अभिमन्त्रामृतायितम्।
जिह्वावज्रांशुनलिकाकृष्टेनानेन तर्पयेत्॥

ॐ आः हुँ गुह्यभक्ष्यं भक्ष्येऽहमिति अमृतास्वादमन्त्रः।

प्रागेव स्नानवेलायां अभिषेकविधिं भजेत्।
चतसृष्वपि सन्ध्यासु ध्यायादेवं समासतः॥

---

[1] C स्फुरेत् प्राणै०। [2] AC प्रचा०।
[3] AC ०पात्रा०। [4] C ०ताख्याना०।
[5] A यँका०। [6] C ०त्रक्रेण।

साधनं वज्रडाकस्य कृत्वा लब्धं शुभं मया ।
यत् ते[1]नार्य्यजनो भूयात् तदर्हं कृतभूषणः ॥

॥ महामायातन्त्रानुसारेण हेरुकसाधनोपायिका समाप्ता ॥

---

249.

[2]श्रीहेरुकमहावज्र कट्ट कट्ट प्रवेशय प्रवेशय बन्ध बन्ध तोषय तोषय सर्व्ववज्रडाकिनीनां हृदयं हुँ हुँ हुँ फट् । ॐ सर्व्व[3]बु[4]द्धडाकिनी प्रतीच्छेमं बलिं ॐ फट् । ॐ वज्रडाकिनी प्रतीच्छेमं बलिं हुँ फट् । ॐ रत्नडाकिनी प्रतीच्छेमं बलिं हुँ फट् । ॐ पद्मडाकिनी प्रतीच्छेमं बलिं [5]ह्रीँ फट् । ॐ विश्वडाकिनी प्रतीच्छेमं बलिं हुँ फट् । ॐ सर्व्वडाकिनी प्रतीच्छेमं बलिं [6]हुँ ह्रीः हुँ हैः । ॐ सर्व्वयोगिनी प्रतीच्छेमं बलिं हुँ हहहीः ।

॥ एवं महामायातन्त्रस्य बलिविधिः समाप्तः ॥

---

[1] A ०नानाद्य० ।
[2] C ॐ नमो श्री० ।
[3] AC ०वच्चा ।
[4] AC ०वच्च० ।
[5] C ह्रीः ।
[6] A omits ॐ ह्रीः ।

## 250.

नमो वज्रडाकाय ।

विस्तरो दुर्ग्रहः प्रायो [1]बालस्त्रीणां भवेदिति ।
संक्षिप्तमपि संक्षिप्य तत् सप्ताक्षरमुद्धरेत् ॥
तत्पूजाशून्यताबोधिमन्त्रपर्य्यन्तमन्तरा ।
कृतवानङ्गमध्यङ्गं वज्रडाकं प्रसाधयेत् ॥
यँ रँ वँ लँ चतुर्भूतमण्डलोपरि चिन्तयेत् ।
सुँकारसम्भवं मेरुं सप्तरत्नाष्टशृङ्गकम् ॥

ॐ मेदिनि वज्रीभव वज्रबन्ध हुँ । ॐ वज्रप्राकार हुँ वँ हुँ । ॐ वज्रपञ्जर हुँ पँ हुँ । ॐ वज्रवितान हुँ खँ हुँ । ॐ [2]वज्रशरजाल त्राँ शँ त्राँ । ॐ वज्रज्वालानलार्क हुँ हुँ हुँ—

विधाय वज्रभूम्यादि[3]षट्कं षडारमालिखेत् ।
विश्वाब्जसंस्थितं चक्रं विश्ववज्रावलीकृतम् ॥
हुँभवं ध्यायेद्चैव वज्रडाकं महासुखम् ।
षड्भुजं त्रिमुखं त्र्यक्षं सर्व्वलक्षणलक्षितम् ॥
व्यञ्जनाशीतिसंयुक्तं आलिकाल्युद्भवं प्रभुम् ।
वज्रघण्टासमापन्नं नरचर्म्मार्द्रधारिणम् ॥
वामे कपालखट्वाङ्गत्रिशूलं दक्षिणे करे ।
कपालमालामुकुटिं विश्ववज्रजटाधरम् ॥
अर्द्धेन्दुशेखरं चैव षण्मुद्रादेहभूषणम् ।
नीलपीतहरितवक्त्रं व्याघ्रचर्म्माम्बरावृतम् ॥

---

[1] AC चल० ।
[2] N omits वज्र० ।
[3] AC ०षडङ्ग० ।

[1]आलीढभ्रान्त[2]सूर्य्यस्थभैरवकालरात्रिकम् ।
यथा नाथस्य तथा वज्रवाराह्यापि [3]भुजादिकम् ॥
देवी जानु समावेष्ट्य परमानन्दविह्वला ।
ज्ञानाकर्षणादिकं कुर्य्यात् जःहुँवँहोरेभिरक्षरैः ॥
षड् योगिन्यः षडारेषु वामावर्त्तविवर्त्तनैः ।
हेरुकी प्रथमा देवी द्वितीया वज्रभैरवी ॥
तृतीया घोरचण्डी [4]च चतुर्थी वज्रभास्करी ।
पञ्चमी वज्ररौद्री च षष्ठी स्याद् वज्रडाकिनी ॥
नीला पीता रक्ता हरिता धूम्रा सिता देव्यः ।
मुक्तकेशा महारौद्रा त्रिनेत्राश्च दिगम्बराः ॥
खट्वाङ्गडमरुघण्टा च हस्तेतरकरद्वये ।
दधाना नरचर्म्माणि प्रेतसूर्य्योपरि स्थिताः ॥
कपालमालामकुटा आलीढासनसंस्थिताः ।
षडक्षरभवा भव्या देव्यः सर्व्वा यथाक्रमम् ॥
लोँ माँ पाँ ताँ खँ इत्येभिः पञ्चधातुभिरधिष्ठिताः ।
ॐ अँ ह्रीँ हुँ होः ह्रीःकारैः स्कन्धान् रूपादिकानपि ॥

भ्रूँ हुँ खँ आः हो हँकारैरायतनानि शोधयेत्। ॐ हः नमः ह्रीः स्वाहा हुँ वौषट् हुँ हुँ होः फट् फट्, उरः-शिरः[5]स्कन्धनेत्रादिषु योजयेत्। ॐ वँ हाँ याँ ह्रीँ मोँ जँ ह्रीँ हुँ हुँ फट् फट्—

नाभिहृद्वक्त्रेषु मूर्ध्नि शिखाया[6]मन्यत्र विन्यसेत् ।
कायवाक्चित्त[चन्द्रे]षु ॐ आः हुँकारमर्पयेत् ॥

---

[1] AC प्रत्याली० ।
[2] AC ०सूर्य्यभै० ।
[3] AN पूजाविधिः ।
[4] AC स्याच्चतु० ।
[5] A ॐ शिखा० C उरसि शिखा ।
[6] C ०यां मन्त्र ।

षट्चक्रवर्त्तिचक्रस्थ[1]देवीवृन्दकरस्थितैः ।
पञ्चामृतद्रवापूर्णैः कपालैरभिषेचयेत् ॥
पूजास्तुत्यमृतास्वादं कृत्वा च भावनां चरेत् ।
सप्ताक्षरं जपे[2]न्मन्त्री निर्विशङ्केन चेतसा ॥

ॐ ह्रीः ह ह हुँ हुँ फट् ।

ध्यानजा[3]पात् यदा खिन्नः तदा शुद्धिमनुस्मरेत् ।

स्मृतिसम्बोध्यङ्गं [4]श्रीहेरुकः, धर्म्मप्रविचयसम्बोध्यङ्गं हेरुकी, वीर्य्यसम्बोध्यङ्गं वज्रभैरवी, प्रीतिसम्बोध्यङ्गं घोरचण्डी, प्रस्रब्धिसम्बोध्यङ्गं वज्रभास्करी, समाधिसम्बोध्यङ्गं वज्ररौद्री, उपेक्षासम्बोध्यङ्गं वज्रडाकिनी—सप्तबोध्यङ्गभावना ।

कण्ठिका रुचकं रत्नकुण्डलं भस्म सूत्रकम् ।
[5]षड् वै पारमिता एता मुद्रारूपेण योजिताः ॥

॥ दुर्ज्जयचन्द्रोद्धृतं सप्ताक्षरसाधनं समाप्तम् ॥

---

[1] AC ०वृन्दस्थ० । [2] C ०न्मन्त्रं । [3] A पादखिन्नतः ।
[4] A omits श्रीहेरुकः—उपेक्षासम्बोध्यङ्गं । [5] A सद्रूपा० ।

## 251.

नमः सम्बराय ।

त्रिमुखं षड्भुजं नीलं स्वाभप्रज्ञाङ्गसङ्गिनम् ।
हुँजं षड्देवतीनाथं नत्वा लिखामि साधनम् ॥

योगी प्रातरुत्थाय समयगुलिकां मुखे प्रक्षिप्य गिरिगह्वरादिमनोरमे स्थाने विश्ववज्रसमासीनो हृदि सूर्य्यस्थनीलहुँकारं पश्येत् । तस्मात् हुँकारात् पञ्चाकारान् रश्मीन् गगनकुहरे त्रैधातुकमभिव्याप्य संस्फार्य्य तैश्च रश्मिभिरकनिष्ठभुवनवर्त्तिनं भगवन्तं वक्ष्यमाणवर्णभुजायुधं सर्व्वयोगिनीगुरुबुद्धबोधिसत्त्वांश्च तिलबिम्बोपमान् आनीयाकाशदेशे पुरतः संस्थाप्य तांश्च रश्मीन् पुनः स्वबीजे संहरेत् । ततः स्वबीजात् संस्फार्य्य बाह्यगुह्यतत्त्वपूजाविशेषैर्भगवन्तं योगिनीगुरुबुद्धबोधिसत्त्वांश्च यथाविधिना पूजयेत् वन्दयेत् । ततस्तेषां पुरतः पापदेशनापापाकरणसंवरं पुण्यानुमोदनात्रिशरणगमनबोधिचित्तोत्पादआत्मभावनिर्य्यातनाअध्येषणायाचनाश्च कृत्वा तदनन्तरं चतुर्ब्रह्मविहा[1]रान् भावयेत् । ततः ॐ शून्यताज्ञानवज्रस्वभावात्मकाः[2] सर्व्वधर्म्माः ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति सकलवस्तुतत्त्वसारसंग्राहकं मन्त्रार्थमामुखीकुर्व्वन् अजातानिरुद्धप्रभास्वरसमाधौ मुहूर्त्तमप्रतिष्ठितरूपेण संतिष्ठेत् । ततः पूर्व्वप्रणिधानावेधसामर्थ्यात् प्रभास्वरादुत्थाय स्वप्नमायावत् विश्वं पश्यन् जगदुत्थायात्मनः श्रीहेरुकत्वं विभावयन् यँ रँ लँ वँ

---

[1] AC °रवान् ।

[2] AC °त्मकोहं ।

परिणतानि धनुस्त्रिकोणवर्त्तुलचतुरस्राणि नीलरक्त-श्वेतपीतानि चतुर्म्महाभूतमण्डलानि उपर्य्युपरि पश्येत्। तदुपरि सुँकारसम्भवं सुमेरुं चतुरस्रं सप्तरत्नमयं अष्ट-शृङ्गोपशोभितं तदुपरि ॐ मेदिनी वज्रीभव वज्रबन्ध हुँ, ॐ वज्रप्राकार हुँ वँ हुँ, ॐ वज्रपञ्जर हुँ पँ हुँ, ॐ वज्र-वितान हुँ खँ हुँ, ॐ वज्रशरजाल चाँ शँ चाँ, ॐ वज्र-ज्वालानलार्क हुँ हुँ हुँ— एतैर्म्मन्त्रैर्वज्रभूम्यादिषट्कं वि[1]धाय तदभ्यन्तरे चतुरस्रादिकूटागारं विभाव्य, तदभ्यन्तरे विश्वपद्मस्थं षडारचक्रं ध्यायात् वज्रपद्मचक्रावलीवृतम्। तदभ्यन्तरे पद्मवराटकस्थं रँभवं सूर्य्यमण्डलं आलिकालि-परिणतं चन्द्रसूर्य्यमण्डलसम्पुटमध्यस्थं नीलहुँकारं वज्र-सत्त्वरूपं भावयेत्। एतत् सर्व्वं परिणम्य भगवन्तं वज्र-डाकं हुँभवं वाराह्यालिङ्गितमहासुखं यथोपदेशं आ-दर्शादिपञ्चज्ञानात्मकं षड्भुजं मूलदक्षिणवामनीलपीत-हरितत्रिमुखं त्रिनयनं द्वात्रिंशल्लक्षणाशीत्यनुव्यञ्जनात्मकं प्रभुं आलिङ्गनभुजाभ्यां वज्रघण्टाधरं इतरोर्द्ध्वभुजाभ्यां नरचर्म्मधारिणं वामभुजासक्तखट्वाङ्गकपालकलितकरं दक्षिणे त्रिशूलधरं कपालमालाभरणोज्ज्वलं षण्मुद्राविभू-षितं व्याघ्रचर्म्माम्बरावृतकटिं विश्ववज्रार्द्धेन्दुमण्डितजटाजूटं आलीढपदाक्रान्तविश्वाब्जसूर्य्यमध्यस्थभैरवकालरात्रिमस्त-कवामकर्णस्तनं[2] भवनिर्व्वाणस्वभावं भावयेत्। यथा नाथस्य तथा वज्रवाराह्या वर्णभुजादिकं किन्तु नरचर्म्म त्यक्ता तत्कराभ्यां धनुर्बाणधारिणी देवी भगवज्ज्ञानुद्वयं समावेष्ट्य

---

[1] AN षड्वि०।  [2] AC ०तनुं।

परमानन्द[1]विह्वला भाव्या। ततः षट्स्वा[2]रेषु वामावर्त्तेन षड्देवतीः पश्येत्। तत्र पूर्व्वारे फट्कारसम्भवा श्रीहेरुकी प्रथमा देवी नीलवर्णा, अपरारे हुँकारसम्भूता द्वितीया वज्रभैरवी पीतवर्णा, अपरारे [3]हाँकारजाता तृतीया घोरचण्डी रक्तवर्णा, अपरारे हकारसम्भूता चतुर्थी वज्र-भास्करी हरिता, अपरारे ह्रीःकारसञ्जाता पञ्चमी वज्र-रौद्री धूम्रवर्णा, अपरारे ॐकारनिष्पन्ना षष्ठी वज्र-डाकिनी सितवर्णा; एता देव्य एकवक्त्राश्चतुर्भुजाः द्वाभ्यां खट्वाङ्गडमरुघण्टाधराः तदितराभ्यां नरचर्म्मोर्द्ध्वधारिण्यः सर्व्वा महारौद्रास्त्रिनेत्रा मुक्तकेशिन्या दिगम्बराः प्रेत-हृद्योपरि स्थिताः कपालमालामुकुटा आलीढासन-संस्थिताः पञ्चमुद्राधराः सिद्धिसान्निध्यकारिका ध्यायात्। तदनु भगवतो हृद्बीजनिर्गतरश्मिभिर्जःकारेण ज्ञानचक्र-मानीय हुँकारेण समयचक्रे जले जलमिव ज्ञानचक्रं प्रवेशयेत्। वँकारेण बन्धनं होःकारेण तोषणं कुर्य्यात्। ज्ञानसत्त्वहृद्बीजं ध्यात्वा लोँ माँ पाँ ताँ खँ इत्येभिः पञ्च धातूनधि[4]तिष्ठेत्, ॐ आः ह्रीः होः हुँ [5]ह्रीःकारैः स्कन्धरूपादिकानपि, भ्रूँ हुँ खँ आः हाँ हाँकारैराय-तनानि [6]शोधयेत्। ततः षड्देव[7]तात्मकमन्त्रकवचैरात्मानं कवचयेत्। ॐ हः हृदये नमः हिः शिरसि स्वाहा हुँ शिखायां वौषट् हे स्कन्धद्वये हुँ हुँ होः चक्षुषोः फट् हुँ सर्व्वाङ्गेष्वस्त्रम्। षड्देवतीविशुद्धि[8]मन्त्रपदैर्भगवतीं

---

[1] A किङ्करा०।
[2] AC षष्ठ च्या०।
[3] A फका०, C हका०।
[4] AN ०ष्ठयेत्।
[5] C ह्रीः०।
[6] AC ग्रोष०।
[7] A ०तान् सकल० N ०तामेक०।
[8] C ०शुद्धेः।

कवचयेत् । ॐ वँ नाभौ हाँ योँ हृदि ह्रीँ मोँ वक्त्रे [1]ह्रँ ह्रौँ मूर्ध्नि हुँ हुँ शिखायां फट् फट् सर्व्वाङ्गेष्वस्त्रम् । तदनु भगवतो भगवत्याश्च कायवाक्चित्तपथेषु ॐ आः हुँ अर्पयेत् । ततः स्वहृद्बीजनिर्यातरश्मिभिः सञ्चोद्य सर्व्वतथागतानानीय अभिषेकमनुनाथयेत् भगवन्तः सर्व्वतथागता अभिषेकं ददन्तु मे इति । तथागतैर्बुद्धैर्न्निर्म्मितरूपवज्रादिभिः पञ्चामृतभृतकलशहस्ताभिषेकाभिरानयेत् ।

अभिषेकं महावज्रं त्रैधातुकनमस्कृतम् ।
ददामि सर्वबुद्धानां त्रिगुह्यालयसम्भवम् ॥

ॐ सर्व्वतथागताभिषेकसमयश्रिये हुँ इति पठित्वा अभिषिच्यमानश्चित्तेशमुकुटो भवेत् । द्वेषपिशुनईर्ष्यारागमोहधर्म्मधातुमुकुटिन्यो देवत्यो यथाक्रमं जायन्ते इति ध्यायेत् । हुँकारजं कुलिशं देव्या एकारजं त्रिदलकमलं आःकारजा कर्णिका ॐकारजं किञ्जल्कं भावयेत् । वज्राङ्कुशाकाररश्म्याकृष्टकमलनालिकां मदनोत्कटविह्वलां अनुरागयेत् । ॐ सर्व्वतथागतानुरागेण वज्रस्वभावात्मकोऽहमिति ध्वनिभिः सञ्चोद्य सर्व्वतथागताननुप्रवेश्यानुरज्य हृदये द्रवीकृत्य वज्रमार्गेण पद्मदले स्फारयेत् । षोडश[2]पूजादेवीः संस्फार्य्य[3] रोमकूपाग्रसन्धिषु विधिवदर्घ्यपाद्यादिकं दद्यात् । ॐ हेरुक अर्घं प्रतीच्छ स्वाहा । [4]ॐ हेरुक पाद्यं प्रतीच्छ स्वाहा । ॐ [5]हेरुक आचमनं प्रतीच्छ स्वाहा । पश्चात् भूतडाकिनीभिर्गन्धैः पुष्पैः

---

[1] C ह्रूँ । [2] A omits ०पूजा० । [3] AN ०स्थार्य्य ।
[4] A omits ॐ...आचमनं...स्वाहा । [5] N ओहे० ।

पूजयेत्। यँकारपरिणतं वायुमण्डलं तदुपरि रेफपरिणतं अग्निमण्डलं तदुपरि रक्तआःकारजं पद्मभाजनं तन्मध्ये वुँ आँ जिँ खँ हुँ एतत्परिणामेन पञ्चामृतपञ्चप्रदीपं स्वबीजाङ्कितं तत्पिधानं ॐकारं तदुपरि अकारजं शशिनं तत्र हुँभववज्रं तद्बीजाङ्कितम्। वायुना वह्नौ ज्वलति तत्पाकेन शुद्धाः सर्व्वतथागताः ॐकारचन्द्रवज्राणि च द्रवीभूय निपतन्ति तत्करोटके। ततः ॐ आः हुँ इत्युच्चार्य्य सर्व्वदेवतानाममृतमाकृष्य तत्रैव प्रवेशयेत्। [1]अनेनैवाधिष्ठाय जिह्वाग्रे वँभवं यवफलप्रमाणं सितवज्रं वज्रनालिकया तदमृतमास्वादयेत्। मुखात् मुखं भगवत्यै दद्यात् देवतीगणाय च। ततो ध्यानात् खिन्नः सम्बराकारमुद्वहन् मन्त्रं जपेत्। तत्र मन्त्रः ॐ ह्रीः ह ह हुँ हुँ फट्। जापात् खिन्नः शुद्धिमनुस्मरेत्। स्मृतिसम्बोध्यङ्गं श्रीहेरुकः, धर्म्मप्रविचयसम्बोध्यङ्गं श्रीहेरुकी, वीर्य्यसम्बोध्यङ्गं वज्रभैरवी, प्रीतिसम्बोध्यङ्गं घोरचण्डी, प्रस्रब्धिसम्बोध्यङ्गं वज्रभास्करी, समाधिसम्बोध्यङ्गं वज्ररौद्री, उपेक्षासम्बोध्यङ्गं वज्रडाकिनी।

कण्ठिका रुचकं रत्नकुण्डलं भस्म सूत्रकम्।

षट्पारमिताविशुद्धा बोध्यङ्गं बल्युपहारपूर्व्वकं त्रिसन्ध्यं भगवन्तं ध्यायेत्। तत्र बलिः। [2]योगी—

आलीढपदसंस्थित उच्चस्थानास्थितस्त्रितः।
दक्षिणाभिमुखो नग्नो मुक्तशिखो निशार्द्धके।
आक्रान्तपादोर्द्धदृष्टिस्तु मूर्धा[3]फेँकारनादतः॥

---

[1] A omits अनेनै०......०मास्वादयेत्।
[2] C योगिनी।
[3] AC ०हेका०।

वज्राञ्ज[1]लिमूर्द्धविकचं कृत्वा तदनु ज्वालामुद्रां विधायावर्त्तावर्त्तेन वीरयोगिनीमाकृष्य ॐ आः वज्र[2]अरलि हो: जः हुँ वँ होः वज्रडाकिन्यः समयस्त्वं दृश्यहोः एवं त्रि चतुः पञ्च वारान् उच्चार्य्य आमन्त्रयेत्। तदनु ॐ ख ख खाहि खाहि सर्व्वयक्षराक्षसभूतप्रेतपिशाचोन्मादापस्मारडाकिन्यादय इमं बलिं गृह्णन्तु सर्व्वसिद्धिं मे [3]प्रयच्छन्तु यथैवं यथेष्टं भुञ्जथ पिबथ जिघ्रथ मातिक्रमथ [4]मम सर्व्वाकारतया शत[5]सुखसमृद्धये सहायका भवन्तु हुँ हुँ हुँ फट् स्वाहा इत्यनेन बलिं दद्यात्। तत्तद्बलिं यथोपदेशं सञ्चारं कृत्वा श्रीचक्रसम्बररूपेण निवारितेन्द्रियो[6] योगी मायोपमं जगदधिमुच्य यथासुखं विहरेदिति ।

अद्वयेनाद्वयं कृत्वा यत् सप्ताक्षरसाधनम् ।
शुद्धं लब्धं शुभं तेन लोकोऽस्तु चक्रसम्बरः ।

॥ सप्ताक्षरसाधनं समाप्तम् ।

। कृतिरियं पण्डितावधूतश्रीमदद्वयवज्रपादानाम् ॥

---

[1] N ०लिः । ऊर्द्ध० ।

[2] AC अलरलिङ ।

[3] A प्रयच्छेव ।

[4] AC omit.

[5] AC ०सुखं प्रवृ० ।

[6] AC add यथा after this.

## 252.

नमः श्रीचक्रसम्बराय ।

सद्गुरुचरणाम्भोजं प्रणम्य संगृह्यते यथाम्नायम् ।
सम्बरतन्त्राश्रयणाद् बाह्यपूजाविधिर्मया स्पष्टम् ॥

इह श्रीचक्रसम्बरं[1] मण्डलके पूजयितुकामो योगी प्रातरुत्थाय यथावसरं वा अविस्मृतदेवतायोगस्तथैव सुदृढतदहङ्कारवान्, विस्मृतदेवतायोगस्तु पञ्चस्कन्धाद्यहङ्कारवान्, स्वभावशुद्धमन्त्रोच्चारणपूर्व्वकं शून्यतामधिमुच्य स्वनाभौ निर्ग्गमप्रवेशेन सह स्फुरणसंहरणपूर्व्वकं आलिकालिपरिणतं चन्द्रं[2] तत्र हुंकारं पारदवर्णं विभाव्य तच्चन्द्र[3]बीजपरिणामेन स्फुरणादिपूर्व्वकं श्रीसम्बरयोगवान् शुचिप्रदेशे पञ्चामृतसुगन्धादिवटिकया तदभावे अन्यतमद्रव्यमिश्रितसमयवटिकया वा संयुतं हस्तं दत्त्वा शुम्भनिशुम्भ इत्यादिकमुच्चार्य्य चतुरस्रमण्डलकं उपलि[4]प्य ॐ वज्ररेखे हुँ इत्यधिष्ठाय तन्मध्ये ह दत्त्वा पूजेत्यादि चतुर्व्विंशत्यक्षराणि पीठोपपीठादिदश[5]भूमिस्वभावानि तत्तद्भूम्यधिमोक्षपूर्व्वकमुच्चारयेत् । ततस्तत्र मण्डले झटिति चतुर्म्महाभूतस्थसुमेरूपरि विश्वचन्द्रे स्वहृदयविनिर्ग्गतहुँकारमवस्थाप्य तद्बीजरश्मिभिर्दशदिक्स्थचिचक्रदेवतामानीय तत्र हुँकारे यथोपदेशं प्रविश्य तत्परिणतं भगवन्तं सपरिवारं सर्व्वाकारनिष्पन्नं पश्येत्। ततः हृद्बीजनिर्गतवीणादिदेवीभिः संपूज्य सप्तरत्नादीनि च निर्गतानि

---

[1] C श्रीसम्ब० ।
[2] N adds तत्र ॐ । after this.
[3] AC चन्द्र० ।
[4] AC ०कोपलि० ।
[5] AC ०स्वभू० ।

ढौकयित्वा यथाविधि शोधि[1]तेन करेण मण्डलकमध्ये त्र्यक्षरमन्त्रेण पुष्पं दद्यात्। पुनस्तत्रैव भगवद्भगवती-हृदयोपहृदयमन्त्रैस्ततो डाकिन्यादीनां यममथनीपर्य्यन्ता-नामेतासामेव मन्त्रेण दिक्षु वामावर्त्तेन विदिक्षु दक्षिणा-वर्त्तेन यथास्थानं पुष्पं मण्डलके दद्यात्। ततः कर-विन्यस्तानां तत्तत्स्थानेषु तत्तन्मन्त्रेण ॐ हः इत्यादिना पुष्पं दद्यात्। तत[2]स्तद्वामकरतलग[3]तपुष्पमष्टपदमन्त्रो-च्चारणपूर्व्वकं मण्डलके प्रक्षिप्य शिरसि अञ्जलिकरण-पूर्व्वकं ध्यानमन्त्रचक्रमात्मनि प्रवेशयेत्। ततो हृदया-द्यष्ट[4]पदैस्तु मन्त्रैः स्तुतिपूर्व्वकं यथावर्त्तितस्तुतिभिश्च संस्तुत्य यथाशक्ति पापदेशनादिकं ध्यानमन्त्रजापप्रणि-धानादिकं च विधाय शताक्षरमन्त्रमुच्चार्य्य [5]योगशुद्धाः सर्व्वधर्म्मा योगशुद्धोऽहमिति मन्त्रसहितकमलावर्त्तमुद्रया सन्तोष्य मुद्रोपसंहारे चाऽऽलिङ्गनाभिधानपूर्व्वकं अना-मिकया भूमिं स्पृशन् ॐ वज्र मुरिति पठन् विसर्ज्य तच्चक्रमात्मनि प्रवेश्य मण्डलकरेखाप्रोक्षणादिकं कुर्य्यात्।

बाह्यपूजाविधेः पुण्यं [6]संग्रहाद् यन्मयार्ज्जितम्।
तेन भूयात् जगत् सर्व्वं बुद्धपूजापरायणम्॥

॥ बाह्यपूजाविधिसंग्रहः समाप्तः।

। कृतिः शाश्वतवज्रस्य॥

---

[1] AC तान्। [2] A वाम॰ only.
[3] N ॰करग॰। [4] C ॰पदान्त॰।
[5] AC ॐ उपाय॰। [6] AC ग्रहा॰।

## 253.

नमः श्रीचक्रसम्बराय ।

प्रणम्य वज्रवाराहीं योगिनीचक्रनायिकाम् ।
संगृह्यते यथाऽऽम्नायं हस्तपूजाविधिर्म्मया ॥

तत्र [1]गणमण्डलादौ[2] श्रीचक्रसम्बरयोगवान् स्ववामकरस्थान् पृथिव्यप्तेजोवाय्वाकाशधातून् [3]पातनी-मारणी-[4]आकर्षणी-नर्त्तेश्वरी-पद्मजालिनी-स्वभावानधिमुच्य वृद्धा-तर्ज्जनीमध्यमानामिकाकनिष्ठातन्नखेषु वज्रसत्त्ववैरोचनामिताभाक्षोभ्यरत्नसम्भवामोघसिद्धिस्वभावान् यथाक्रमं शुक्ल[5]पीतरक्तकृष्णहरितवर्णेन ॐ हः नमः हि[6] स्वाहा हुँ वौषट् हे हुँ हुँ होः फट् हँकारान् विन्यसेत् । करतले झटिति निष्पन्नं रक्तपञ्चदलकमलं ध्यात्वा तत्पूर्व्वदिग्दलेषु वामावर्त्तेन यथाक्रमं यामिनी-मोहनी-[7]सञ्चालिनी-सन्त्रासिनी-चण्डिकास्वरूपाणीति नीलश्वेतपीतहरित-धूम्रधूसरवर्णानि हाँ याँ ह्रीँ मेँ ह्रेँ ह्रीँ हुँ हुँ [8]फट् फट् इति बीजाक्षराणि पश्येत् । कर्णिकायां च वज्र-वाराहीस्वभावं रक्तवर्णं ॐ वँ इति बीजं एतत् प्रतिबिम्बं चक्र[9]त्रयं वा अधः करपृष्ठेऽपि स्फुटं पश्येत् । ततस्तत्कर-गतानि बीजाक्षराणि [10]द्रवद्रव्येन म्रक्षयित्वा[11] सर्व्ववीर-योगिन्यधिष्ठितत्रिचक्रस्वभावमधिमुच्य तत् द्रवादिद्रव्यं

---

1 AC मण्ड० ।
2 A adds नमः after this.
3 AN यातः ।
4 AC omit.
5 N repeats ०पीतरक्त० ।
6 A क्रि ।
7 N चालि० ।
8 A omits.
9 AC ०द्वय० ।
10 AC उपद्र० ।
11 AC add तत्करतलं ।

त्र्यक्षरमन्त्रेण अष्टपदमन्त्रेण वा दद्यात्। ततः संपूज्य न्यूनाधिकविधिपूरणार्थं शताक्षरमन्त्रं पठित्वा चक्राद्यधिष्ठानाद्यर्थं अध्येष्य तद्द्रव्यमपरस्मिन् द्रव्ये अन्यत्र वा स्थापयित्वा हस्तलग्नेन द्रव्येन वामानामिकागृहीतेन हृज्जिह्वा[1]शिरांसि हुँ आः ॐकारोच्चारणपूर्व्वकं म्रक्षयन् तद्देवतावृन्दमात्मनि प्रविष्टमधिमुञ्चेत्।

इति लिखिता हस्तपूजा मयाऽस्य सम्बरतन्त्रसम्बद्धा।
स्मृतये मन्दधियामपि शाश्वतवज्रेण गुरुवरा[2]म्नायतः॥

अथ पूर्व्वोक्तविधिविशोधितवामकरानामिकया पीठोपपीठादि[3]चतुर्विंशत्यक्षराण्युच्चारयन् यथाविधिविशोधितमदनेन त्रिकोणचक्रद्वयमालिख्य तन्मध्ये च वर्त्तुलमण्डलम्। तत्र स्वहृद्बीजनिर्गततत्किरणाकृष्टं वा साधारणाधेयमण्डलं विचिन्त्य तस्मै पञ्चामृतादिरूपेण निष्पादितं खाद्यपेयादिकं त्र्यक्षरेणाष्टपदमन्त्रेण वा दत्त्वा पद्मभाजनगतं अमृतायितमदनं वृद्धानामिकाभ्यां गृहीत्वा भगवन्तं भगवतीं च स्वस्वहृदयोपहृदयमन्त्राभ्यां डाकिन्यादियममथनीपर्य्यन्तां[4] यथास्वमेतासामेव मन्त्रेण तर्प्पयेत्। ततः सम्पूज्य न्यूनातिरेकविधिपूरणार्थं शताक्षरमन्त्रं पठित्वा गणचक्राधिष्ठानार्थं चाध्येष्य ॐ योगशुद्धाः सर्व्वधर्म्मा योगशुद्धोऽहमिति पठन् कमलावर्त्तमुद्रया सन्तोष्य हृन्मुद्रोपसंहारे आलिङ्गनाभिनयपूर्व्वकं अनामिकया भूमिं संस्पृ[5]शन् ॐ वज्र मुरिति विसर्ज्जयेत्, तच्चक्रमात्मनि प्रवेशयेत्। तत-

---

[1] AN ०श्चिरसि।  [2] AC ०म्नायात्।
[3] N adds स्वभावपूजेत्यादि after this.
[4] A adds न च after this.  [5] A ०म्प्रानेन।

स्तर्जनीगतमदनं वामानामिकया गृहीत्वा तेन हृज्जिह्वा-
शिरांसि हुँ आः ॐकारोच्चारणपूर्व्वकं भक्षयन्[1] तत्कर-
गतमपि देवताचक्रमात्मनि प्रविष्टमालोकयेदिति ।

चक्रसम्बरनाथस्य त्र्यस्रमण्डलवर्त्तिनः ।
एषा हस्तेन पूजोक्ता योगिनां हितकारिणी ॥
सम्पूज्य यन्मयाऽवाप्तं हस्तपूजाविधिं शुभम् ।
तेन सर्व्वजनाः सन्तु हस्तपूजापरायणाः ॥

॥ हस्तपूजाविधिः समाप्तः ।
। कृतिः शाश्वतवज्रस्य ॥

---

254.

नमः श्रीबुद्धकपालाय ।

प्रथमं तावन्मन्त्री मनोऽनुकूले भूभागे गत्वा द्वादशा-
र्घामृतेनोपलिप्य कल्पयेत् । स्वाधिष्ठाने प्रथमं ध्यात्वा
भूतभौतिकं स्फारयेत् । स्वहृदये हुताशनमक्षरं ध्यात्वा
सूर्य्यमण्डलं कल्पयेत् ॐकारेण चन्द्रमण्डलं द्वयोरेकी-
भूय सूर्य्यमण्डलं परं दृश्यते । तस्योपरि हुँकारं विचिन्त्य
रश्मिमेघांश्च स्फारयेद् बुधः । तेन रश्मिना गुरुबुद्धबोधि-
सत्त्वानाकृष्य पुरतः संस्थाप्यार्च्चयेत् । पश्चात् क्षमापयेत् ।
स्वभावशुद्धादिमन्त्रमुच्चार्य्य निस्तरङ्गं विभावयेत् पद्माष्ट-
दलं सूर्य्याक्रान्तम् । सूर्य्यस्योपरि न्यस्येत् अक्षरद्वयम् ।
हुँकारेण प्रज्ञालिङ्गितहेरुकं झटित्याकारयोगेनात्मानं
विचिन्त्य पञ्चविंशतियोगिनीभिः सह एवं दृश्यते । हेरुक-

---

[1] AC ०येत् ।

नाथेन कामयेत् सर्व्वयोगिन्यः। सर्व्वे ते द्रवीभूय सूर्य्य-मण्डलसमवस्थितं दृष्ट्वा देवीं चोदयन् चतुर्योगिन्यो-ऽभ्यन्तरसाधने—

[1]किचे णिच्चअ विसाअगउ लोअ णिमन्तिअ काईं।
[2]तह वत्ता ण जइ सम्भरसि उट्ठहिं सअल [3]विसाईं॥
कज्ज अप्पाण वि करिअ पिअ [4]मा कर[5]सु विणवि चित्त।
भवभअ पडिआ सअल जणु उट्ठहि जोइनिमित्त॥
पूव्वपइ ज्जइ सम्भरसि मा कर कज्ज [6]विसाउ।
तइ अथमिन्ने[7] सअल जणु परिअवज्ज गउसाउ॥
मिछें[8] माण वि मा करहि पिअ [उ]ट्ठइ सुणसहाव।
कामहि [9]जोइणि विन्द [10]तुहु फिट्टउ अहवा भाव॥

ईदृशेन गीतेन चतुर्योगिन्यश्चोदयन्त्यः पूर्व्ववद् वक्त्रवर्ण-चिह्नाद्ययोगिन्या सह। ततः—

उत्थितोऽसौ महावीरो घोरसंहारकारकः॥

नीलवर्णो महावपुः अस्थ्याभरणमर्द्धपर्य्यङ्कन्टत्यस्थं मुण्डमालाविभूषितं मुकुटे अक्षोभ्यधारिणं एकवक्त्रं चतुर्भुजं

---

[1] छाया —

कृत्ये निश्चय(नित्यं च)विषादगतो लोको निमन्त्यते कथम्।
तथा वार्त्तां न यदि संस्मरसि उत्तिष्ठति सकलो विषादेन॥
कार्यमात्मनोऽपि कृत्वा प्रिय! मा कुरु द्वयमपि चित्तम्।
भवभये पतिताः सकला जन्तव उत्तिष्ठ योगिनीमित्र॥
पूर्व्वपदं यदि संस्मरसि मा कुरु कार्य्ये विषादम्।
त्वयि अस्तमिते सकलजन्तवः परिवर्जका गतोत्साह॥
मिथ्या मानमपि मा कुरु प्रिय [उत्]तिष्ठ शून्यस्वभाव।
कामय योगिनीवृन्दं त्वं भ्रश्यतु (स्फोटतु) अथवा भावः॥

[2] AC तहवणज्जइ। [3] AC विवाअ। [4] C साकर। [5] C सुस। [6] C ०साडे। [7] A मिन्ते। [8] AC अक्कहि। [9] A ओइणि। [10] N तुईं।

वामे खट्वाङ्गकपालं दक्षिणे कर्त्त्रिंडमरुकं प्रज्ञालिङ्गितं वामे चित्रसेना मत्ता नग्ना मुक्तकेशी सर्व्वभय[1]रहिता देवी चुम्बयन्ती मुहुर्म्मुहुः। एवं आत्मानं ध्यात्वा [2]स्फार-येत् योगिनीनां मण्डलिका दिशासु विदिशासु च।

प्रथमाभ्यन्तरपुटे पूर्व्वे देवी सुमालिनी नीला उत्तरे कपालिनी पीता पश्चिमे भीमा श्यामा दक्षिणे दुर्ज्जया शुक्ला ; द्वितीयपुटे पूर्व्वे शुभमेखला उत्तरे रूपिणी पश्चिमे [3]विद्या दक्षिणे कौबेरी ऐशान्यां कामिनी वायव्यां महो-दधिः नैर्ऋत्यां कारिणी आग्नेय्यां मारिणी ; तृतीयपुटे पूर्व्वे भीमदर्शना उत्तरे [4]अजया पश्चिमे शुभा दक्षिणे ओस्तारकी ऐशान्यां सुरक्षिणी वायव्यां विकालराची नैर्ऋत्यां महायशा आग्नेय्यां सुन्दरी। कायवाक्चित्त-विशुद्धितस्त्रयः पुटलक्षणाः चत्वारि द्वारपालिनीनां नामानि कथयामि, पूर्व्वद्वारे सुन्दरा उत्तरे सुभगा पश्चिमे प्रियदर्शना दक्षिणे नैरात्म्या। सर्व्वा देव्यो नीलवर्णा द्विभुजा एकवक्त्रा अस्थ्याभरणाः पिङ्गोर्द्ध्वकेशा मुण्ड-माला[5]रहिता वामे कपालं दक्षिणे कर्त्त्रिका अर्द्धपर्य्यङ्क-नृत्यस्थाः। आसां पञ्चविंशतिस्तूर्य्यासनानि द्रष्टव्यानि। मण्डलचक्रं तु भावयेत्—

चतुरस्रं चतुर्द्वारं चतुस्तोरणभूषितम्।
अष्टस्तम्भोपशोभितं वेदिकापट्टिकायुतम्॥

---

[1] AC ०हरिता। [2] AC स्फुरेद्यो०।
[3] N जया। [4] A अजेया।
[5] C omits ०रहिताः ... ०शोभितं।

बाह्यतोऽष्ट श्मशानानि कल्पयेत्। खिन्ने सति मन्त्रं जपेत्—ॐ महावज्रो हेरुकव[1]ज्रो धरतु[2] धरतु[3] महाज्ञानस्फोटने शीघ्रं साधय स्तम्भय कीलय हुँ फट् स्वाहा।

उत्पत्तिक्रमं कथितं उत्पन्नं गुरुगोचरम्।
भूतभौतिकसंवरं योगिनीनां प्रकल्पितम्॥
अद्वययोगज्ञानं तु प्रज्ञालिङ्गितहेरुकम्।
क्लेशानां वशीकारार्थं यावन्मुद्रः प्रकल्पितः।
धीरो विनीतो मतिमान् सर्व्वाकुशलवर्ज्जितः॥
शुचिश्च गुरुभक्तश्च बुद्धकपालयोगतः।
सिध्यन्ति षण्मासेनैव योगिनो नात्र संशयः॥

॥ श्रीमतो भगवतो बुद्धकपालस्य साधनम्॥

---

255.

निःशेषदुःखमपनीय समस्तसौख्य-
माधातुमाभवमहं कुशलं त्रिलोक्यम्।
बुद्धो भवेयं इति तु प्रणिधिं विधाय
प्रस्थानरूपमपरमुप[4]बृंहणीयम्॥
योगस्तु त्रिविधो[5] ज्ञेयोऽधिष्ठानं च प्रकल्पितम्।
निष्पन्नचित्तबिम्बस्य योगो बुद्धैस्तु[6] कल्पितः॥
यद्वा झटिति योगेन वज्रडाकः स्वयं भवेत्।
भावयित्वा विना बीज[7]मुपपादकसत्त्ववत्॥

---

[1] AC हेव्र०। [2] N धर धर।
[3] N adds धुरु धुरु। [4] C परि०।
[5] ANb ०स्तुतिविधो। [6] AC प्रक०।
[7] AC बीजज०।

ललाटस्थकपाला[1]नि चन्द्रार्द्धं मूर्ध्नि धारयेत् ।
षण्मुद्रा मुण्डमाली च विश्ववज्री त्रिलोचनः ॥
आलीढपदविन्यासो विश्वाक्षरविवर्त्तिनीम् ।
सभैरवां कालरात्रिमारूढो व्याघ्रचर्म्मभृत् ॥
अक्षोभ्यशेखरः कुब्जो वज्रघण्टाजटान्वितः ।
वीरोऽसौ वज्रवाराही वज्रासृक्पूर्णकपालभृत् ॥
खट्वाङ्गमेखला रक्ता त्रिनेत्रा मुण्डमालिनी ।
पञ्चमुद्रा मुक्तकेशी दिग्वस्त्रा बुद्धशेखरा ॥
एवं झटिति निष्पन्नं भावयेदात्मविग्रहम् ।
पञ्चज्ञानमयं स्वच्छं विस्फुरद्बुद्धरोचिषम् ॥
एतदेव [2]चिरं चिन्त्यमेकगोचरचेतसा ।
आरोप्य तत्पदे सत्त्वान् ततो[3] द्वन्द्वरतिर्भवेत् ॥
धर्म्मधातुध्वजासङ्गा नामन्द[4]स्पन्दसम्पदा ।
संविदानन्दसन्दोहस्यन्दिनी समुदेति या ॥
तामुदारमनस्कार[5]स्फारसंस्कृतसन्ततिः ।
सततं भावयन्नेवं प्रभास्वरमनुस्मरेत् ॥
विश्वारविन्द[6]रविभैरवकालरात्रिका
कान्तापतिद्युमणिपञ्च[7]तथागताधः ।
अङ्गोत्तमाङ्गसितदीधितिबिन्दुनादः
एते निराकृतिपदं क्रमशः प्रवेश्याः ॥
श्वासवातो यथादर्शे लयं गच्छति सर्व्वतः ।
भूतकोटिं तथा योगी प्रविशेच्च मुहुर्म्मुहुः ॥

---

[1] Nb ०लानीच्च० । [2] AC omit.
[3] AC नभो । [4] AC च मन्द०, Nb ०दामन्द० ।
[5] AC ०मलङ्कार० । [6] A ०रचिते ।
[7] AC ०मणिच्च ।

सर्व्वव्यापि निराभासं करुणैकरसं मनः।
आलिङ्गति झटित्येषा दृषस्यन्तीव शून्यता॥

साकारा च निराकृतिर्भगवती प्रज्ञा तयाऽऽलिङ्गितः
उत्पादव्ययवर्ज्जितोऽक्षरसुखो हास्यादिसौख्यो[1]च्छ्रितः।
बुद्धानां जनकः त्रिकायसहितस्त्रैकायसंवे[2]दकः
[3]सर्व्वज्ञः परमादिबुद्धभगवान् वन्दे तमेवाद्वयम्॥

कं तत् सुखं रुणद्धीति[4] करुणाज्ञानमक्षरम्।
शून्यताप्रति[5]मेनेव सर्व्वभावस्य दर्शनम्॥

सर्व्वतः पाणिपादाद्यं सर्व्वतोऽक्षिशिरोमुखम्।
सर्व्वतः श्रुतिमान् लोके सर्व्वमावृत्य तिष्ठति॥

[6]एकः स्वाभाविकः कायः शून्यताकरुणाद्वयः।
नपुंसकमिति ख्यातो युगनद्ध इति क्वचित्॥

निरावरणधर्म्मेण स्कन्धादीनामिह स्थितम्।
सर्व्वमण्डलमेवेदं आधेयाधारलक्षणम्॥

॥ द्विभुजसम्बरोपदेशः समाप्तः।

। कृतिरियं महापण्डितरत्नाकरगुप्तानाम्॥

---

[1] C ०ज्झितः।
[2] A ०काल्यसम्पा०, Nb ०काल्यसखे०।
[3] AC सवि०।
[4] ACNB ०द्धीति, NA ०दीति।
[5] AC ०स्येनेव।
[6] AC एषः।

256.

[1]श्लीँ बुद्धभट्टारकस्य हृदयमिदं [2]म्रीँ मञ्जुश्रीहृदयमिदं ह्रीः आर्य्यावलोकितेश्वरस्य हृदयमिदं धीः वज्रभीष्मस्य हृदयमिदम्। अमीषां चतुर्णां हृदयानां मध्ये अन्यतमं हृदयं जपतां स्वकस्वकदेवतायोगं कृत्वा वाग्मिता सेवोचिता श्रुतिधारिता असमानप्रतिभानता सर्व्वत्र वादे विजयिता [3]अल्पायासात् पञ्चाभिज्ञाता सिध्यति। हृच्चन्द्रमण्डलमध्ये अशेषवाङ्मयशरीरं हृदयाक्षराणां मध्ये अन्यतमदक्षरं ध्यायतां दूरदर्शिताद्यभिज्ञाज्ञानं प्रसिध्यति।

॥ [ हृदयमन्त्रसिद्ध्युपदेशः ] ॥

257.

पूर्व्वोक्तविधानेन—

स्वधातुरेफजे सूर्य्ये हुँकारं ज्वलद्भास्वरम्।
कल्पानलमिवात्युग्रं कृष्णवर्णं महाद्युतिम्॥
तदुत्पन्नं महारौद्रं वज्रहुँकारसंज्ञकम्।
अट्टहासं महारौद्रं क्षेपयन्तं त्रिधातुकम्॥
घण्टावज्रप्रयोगेन मुद्रा[4]बद्धकरद्वयम्।
प्रत्यालीढपदेनैव भैरवाक्रान्तभीकरम्॥

[1] A श्रीँ, C श्वीँ। [2] A म्वीँ, Nb क्लिँ।
[3] AC omit अल्पा० … ०भिज्ञाता। [4] AC ०बन्ध०।

हृत्कण्ठमस्तकन्यस्तं ॐ आः हुँ अक्षरत्रयम्।
अभिषेकविधानेन चित्तवज्रेण मुद्रयेत्॥
मन्त्रः। ॐ हुँ हुँ फट् स्वाहा।

॥ वज्रहुँकारसाधनम्॥

---

258.

पूर्व्वोक्तविधानेन शून्यतानन्तरं सितपद्मसूर्य्ये हुँभवमहाबलमेकमुखं चतुर्भुजं सर्व्वाङ्गरक्तमूर्द्धपिङ्गलसर्प्पावबद्धकेशं दक्षिणभुजाभ्यां सितदण्डसित[1]चामरधरं वामभुजाभ्यां वन्दनाभिनयसपाशतर्ज्जनीकरं व्याघ्रचर्म्मनिवसनं सर्पाभरणं प्रत्यालीढं दंष्ट्राकरालवदनं सूर्य्यमण्डलप्रभामालिनं अमिताभमुकुटिनं ध्यात्वा[2] मन्त्रं जपेत्— ॐ महाबल स्वाहा।

॥ इति महाबलसाधनम्॥

---

[1] AN omit सित०; A वामधरं, B ०चामरं।
[2] ANC ध्यायात्।

## 259.

पूर्व्वोक्तविधानेन विश्वकमलसूर्य्ये रक्तहुँकारज्ञान-निष्पन्नं आर्य्यहयग्रीवं रक्तवर्णं त्रिमुखमष्टभुजं प्रतिमुखं त्रिनेत्रं नीलसितदक्षिणेतरवदनं सर्प्पाभरणं ललिताक्षेप-पदन्यासं सक्रोधदृष्टिनिरीक्ष[1]णं प्रथममुखं स्मेरं ललज्जिह्वं दक्षिणमुखं दंष्ट्रावष्टब्धौष्ठं वाममुखं व्याघ्रचर्म्मनिवसनं वज्रदण्डकरणमुद्राशरोद्यतदक्षिणकरचतुष्टयं [2]तर्ज्जनिका-स्वकुच[3]ग्रहपद्मधनुरुद्यतवामकरचतुष्टयं अक्षोभ्यमौ[4]लिनं ध्यायादिति परमाश्व[5]वज्रो नाम समाधिः। मन्त्रजापः— ॐ हुँ हयग्रीव स्वाहा।

॥ हयग्रीवसाधनम् ॥

---

## 260.

[6]नमो हयग्रीवाय।

इहाद्यनुत्पन्नेनावस्थितः सर्व्वस्वभाव इति सौगतमतं विदित्वा ततः सुमेरुपृष्ठ[7]मष्टास्रं सप्तरत्नमयं तन्मध्ये सहस्रयोजनप्रमाणं मस्तकं [8]तत्रोपविश्य रत्नत्रयशरण-गमनादिपुरःसरं कायवाक्चित्तमधिष्ठाय तेनैवाकाश-

---

[1] ANC ०माणं। [2] AC वज्रतर्ज्ज०।
[3] B क्रूर०। [4] ANB ०लिं।
[5] ANC ०ज्ञानवज्रो।
[6] Only Ab gives the *Namaskāra*.
[7] ANC omit ०पृष्ठ०; Nb ०संहृष्ठ०।
[8] ACAb तत्र प्रवि०।

व्यापिसूर्य्यमण्डलमभिनिर्म्माय तेनैव हूँकारं ज्वलद्भास्वराकारं विचिन्त्य ततो [1]नमः समन्तकायवाक्चित्तवज्राणां ॐ आः हुँ इत्यनेन दशदिगनन्तपर्य्यन्तलोकधातुव्यवस्थितान् सर्व्वबुद्धबोधिसत्त्वा[2]नानीय ज्ञानाकारेण प्रवेश्य पुनर्द्वितीयहूँकारेण हयस्कन्धरं सञ्चोद्यानीय प्रवेश्य तृतीयहूँकारेणाहमेव हयग्रीववज्रस्वभावात्मकोऽहं रक्तवर्णं महाभयानकं त्रिनेत्रं कपिलश्मश्रुरौद्रं बृहदुदरं दंष्ट्राकरालिनं दन्तौष्ठकपालमालिनं जटामुकुटिनं अमिताभशिरस्कं द्वितीयमुखं [3]भीमभयानकं नीलं[4] हयाननं हीहीकारनादिनं ब्रह्माण्डशिखराक्रान्तं द्वितीयेन भवाग्रपर्य्यन्तं अष्टनागोपेतं खर्व्ववामनाकारं व्याघ्रचर्म्मनिवसनं सर्व्वालङ्कारभूषितं सकलदेवासुरं तर्ज्ज[5]यन्तं गृहीतवज्रदण्डं[6] नानावर्णाश्च रश्मयः स्फुरणसंहरणपूर्व्वकं विचिन्तयेदिति । अस्य भगवतः प्रभावात् चिन्तामणिभद्रघटकल्पतरुरसरसायनादीनि सि[7]द्धिसाधनानि अभिमुखीभवन्तीत्युक्तं सप्तशतिककल्पे । किञ्च भगवतो लक्षत्रयजापात्[8] उभयचक्रवर्त्तिराज्यमामुखीभवति, अनेकाभिरप्सरोभिः परिवृतः[9] पुरस्कृतो विद्याधर[10]स्थाने बहलसुख-

---

[1] C मनः ।

[2] NAb ०द्यानीय ।

[3] ACNb omit.

[4] Ab omits.

[5] ACNb तर्पं० ।

[6] A breaks at this point and the present *Sādhana* ends there with the concluding portion of वज्रज्वालनलार्कसाधन omitting the intermediate part which comes again at the end of the codex.

[7] ACNb ०दिसि० ।

[8] Ab ०त्रयं जपेत् ।

[9] ACNb ०स्कृतः ।

[10] Ab ०लत्र ।

मनुभवन् एव ति[1]ष्ठति, देवेन्द्रः छत्रधरो भवति, ब्रह्मा च मन्त्री, [2]वैमचित्री सैन्यपतिः, हरिः प्रतिहारः। समस्तदेवा [3]अवलगन्ति, [4]नग्नाचार्य्यः शङ्करः समस्तगुणानुपदर्शयति, यावत् भगवान् मैत्रेयो नाभिसम्बुध्यति तावत् तिष्ठति। अभिसंबुद्धे चानु[5]त्तरायां सम्यक्सम्बोधौ [6]व्याकरोतीति।

॥ सप्तशतिककल्पोक्तं हयग्रीवसाधनं समाप्तम् ॥

---

261.

तथैव सूर्य्ये नीलहुँकारजं परमाश्वं रक्तं चतुर्म्मुखं अष्टभुजं चतुश्चरणं प्रथममुखं क्रोधशृङ्गारं त्रिलोचनं दक्षिणं रौद्रं वामं ब्रह्ममुखं मूर्ध्नि ललितोद्वलितोष्ठं[7] हरिताश्वमुखं एकेन दक्षिणत्रिपताकाधरकरेण विश्ववज्रसहितेनोत्तिष्ठाभिनयं कुर्व्वन्तं एकेन[8] वामखेटक[9]हस्तेन विश्वपद्मं धारयन्तं पुनर्दक्षिणत्रिपताकाकरेणोत्तिष्ठाभिनयं कुर्व्वन्तं[10] पुनर्वामकरेण शक्तिं धारयन्तं पुनर्दक्षिणकराभ्यां खड्गं[11] बाणं च अवशिष्टवामकराभ्यां दण्डं चापं च धारयन्तं प्रत्यालीढेन दक्षिणपादैकेनेन्द्राणीं श्रियं चाक्रम्य स्थितं

---

[1] Ab ०वंस्ति० ।
[2] Ab वेम० ।
[3] ANb च लग० ।
[4] Ab लग्ना० ।
[5] Nb ०द्धेरनु० AC ०द्धेः चानु० ।
[6] ACNb व्याक्रियते ।
[7] B ललितोर्द्धललितोष्ठं ।
[8] B एतेन ।
[9] B ०खड्ग० ।
[10] AC add पुनर्वामकरेणोत्तिष्ठाभिनयं कुर्व्वन्तं after this.
[11] AC ०खट्वाङ्ग० ।

द्वितीयदक्षिणचरणेन रतिं प्रीतिं च वामप्रथमपादैकेनेन्द्रं मधुकरं च वामद्वितीयपादेन जयकरं वसन्तं च इत्यात्मानं ध्यायात् इति। मुद्रा— विश्ववज्रत्रिपताकोत्तिष्ठा परमाश्वमुद्रा। मन्त्रः— ॐ शुम्भ निशुम्भ हुँ।

॥ इति परमाश्वसाधनम् ॥

---

262.

पूर्व्वोक्तविधानेन सूर्य्ये नीलहुँकारजं त्रैलोक्यविजयभट्टारकं नीलं चतुर्म्मुखं अष्टभुजं प्रथममुखं क्रोधशृङ्गारं दक्षिणं रौद्रं वामं बीभत्सं पृष्ठं वीररसं द्वाभ्यां घण्टावज्रान्वितहस्ताभ्यां हृदि वज्रहुँकारमुद्राधरं दक्षिणत्रिकरैः खट्वाङ्गाङ्कुशबाणधरं वामत्रिकरैश्चापपाशवज्रधरं प्रत्यालीढेन वामपादाक्रान्तमहेश्वरमस्तकं दक्षिणपादावष्टब्धगौरीस्तनयुगलं बुद्धस्रग्दाममालादिविचित्राम्बरा[1]भरणधारिणं[2] आत्मानं विचिन्त्य मुद्रां बध्नयेत्। तत्र मुष्टिद्वयं पृष्ठलग्नं कृत्वा कनीयसीद्वयं शृङ्खलाकारेण योजयेदिति। मन्त्रः— ॐ शुम्भ निशुम्भ हुँ गृह्ण गृह्ण[3] गृह्णापय गृह्णापय[4] हुँ आनय होः भगवन् विद्याराज हुँ फट्।

॥ त्रैलोक्यविजयसाधनम् ॥

---

[1] AC °त्रवरा°। [2] AC °भरणं।
[3] ANC add a third गृह्ण।
[4] ANC add a third गृह्णापय।

## 263.

तथैव शून्यतानन्तरं सूर्ये नीलहुँकारपरिणतं वज्र-ज्वालानलार्कं नीलवर्णं ज्वालामालाकुलप्रभं[1] चतुर्मुखमष्टभुजं शृङ्गारवीरबीभत्सकरुणरसान्वितचतुर्मुखं चतुर्भिर्दक्षिणकरैर्वज्रखड्गचक्रबाणधरं चतुर्वामकरैर्घण्टा-चापपाशखट्वाङ्गासक्तविचित्रपताकाधरं ज्वलदनलकपिल-शिखाकलापं अतिभीषणमहाहिवलयकङ्कणकटिसूत्रनूपुर-कण्ठिकाकुण्डलमुकुटाभरणं महामायाचक्ररचन[2]चतुरं सपत्नीकं विष्णुमालीढपदेनाक्रम्यावस्थितं भावयेदिति। ततो मुद्रां बन्धयेत् तलवज्रबन्धाङ्गुलिज्वालागर्भमध्ये अङ्गुष्ठद्वयमुत्थितं कृत्वा। मन्त्रं जपेत्— ॐ वज्रज्वाला-नलार्क हुँ इति।

॥ वज्रज्वालानलार्कसाधनं समाप्तम् ॥

---

## 264.

नमो भूतडामराय।

शक्रब्रह्मकुबेरादिमदविध्वंसकोविदम्।
श्रीभूतडामरं नत्वा लिख्यते तस्य साधनम्॥
संक्षिप्ताम्नायसंयुक्तं संक्षिप्तरुचि[3]रञ्जनम्।
यक्षरक्षादिसंसिद्धिकौतुकैकहृदा मया॥

---

[1] AC ज्वालाकु०।
[2] ANC ०वरण०।
[3] AC ०र जलं।

प्रथमं तावन्मन्त्री स्वहृदीन्दौ विश्वविकाशिरश्मिसमाकुलकलेवरं रक्तारँबीजं विचिन्तयेत्। ततस्तद्विनिःसृताङ्कुशाकाराकृष्टं पुरतो डामरमभिसम्पूज्य सप्तविधानुत्तरपूजाभिः शून्यतां भावयेत्। ततः—

कुन्दाभिनिर्म्मलविकाशिनिशाकराङ्कं
शङ्खाभहुँकृतिकृतास्पदबिन्दु[1]मध्ये।
देदीप्यमानमखिलं परिणम्य सम्यक्
विश्वाष्टकोमलदलं कमलं प्रपश्येत्॥

ततः तन्मध्ये अकारपरिणतौषधीशोपरि हुँकारगर्भं हुँकारपरिणतनीलज्वालावज्रं विभाव्य पश्येत् तत्परिणतम्—

झटिति विकट[2]नीलं भूतसन्त्रासशीलं
जगदुपकृतिकर्त्तुर्व्यापिरक्तैकहेतिम्।
हरिहरसरजन्माद्युग्रमारैकवीरं
विकटदशनमीषद्विस्फुरत्क्रोधजालम्[3]॥
नीलपिङ्गोर्द्ध्व[4]द्धकेशं नीलवस्त्रावृततनुम्।
दक्षिणे वज्रधरं वामे सपाशतर्ज्जनीधरम्॥

पञ्चकपालमकुटं वामे त्रिशूलकपालधरं दक्षिणे डमरुकर्त्तिकाधरं कपिलजटामुकुटिनं त्रिनेत्रं व्याघ्रचर्म्माम्बरं सितं महाभूताधिपापराजितं प्रत्यालीढपदाक्रान्तम्—

हस्तद्वयसमाबद्धमुद्रं श्रीभूतडामरम्॥

---

[1] AN ०मध्यं। [2] C ०लीलं।
[3] A ०कारं। [4] AC ०र्द्धावव०।

[1]तत्रेयं मुद्रा—

अनामिकाद्वयं वेष्ट्य कुञ्चयेत् तर्ज्जनीद्वयम् ।
कनिष्ठां मध्यमां चैव ज्येष्ठाङ्गुष्ठेन चाक्रमेत् ॥

अष्टनागोपशोभितं तत्र शिरोवेष्टनं कर्कोटको नीलः ग्रीवाभरणं तक्षको रक्तः नन्दोपनन्दौ कर्णकुण्डलौ पीतावेक एव ब्रह्मसूत्रमनन्तः सितः कटिसूत्रं वासुकिः शुक्लः मुद्राभुजयोः केयूरं कुलिकः पारावतवर्णः इतरभुजयोस्तथा शङ्खपालो धवलः नूपुरौ पद्ममहापद्मौ रक्तावेक एव ।

रक्तचक्षुर्द्वयं चैव भूतं श्रीभूतडामरम् ।
चिन्तयेदति संक्रुद्धं जगदर्थैकतत्परः ।
हृत्कण्ठोर्णामूर्धानं सततं रक्षार्थं मुद्रया[2] स्पृशेत् ।
ध्यानात् खिन्नो जपेन्मन्त्रं वज्रवाचा क्रोधवाचा वा ॥

मन्त्रः । हुँ वज्र फट् इति

अभ्यर्थितोऽस्मि गुणिना खलु सज्जनेन ।
केनापि तेन लिखितं किमपि स्फुटं मे ॥
वैरोचनेन यदवाप्तमितः शुभं तत् ।
त्रैलोक्यलोककलुषापहरं शमन्तु ॥

॥ श्रीभूतडामरसंक्षिप्तसाधनं समाप्तम् ॥

---

[1] AC तत्रैव ।

[2] AC मूर्धया ।

265.

प्रणम्य डा[1]मरं भक्त्या द्वेषवज्रं महर्द्धिकम् ।
तस्यैव साधनं वक्ष्ये यथातन्त्रानुसारतः ॥

साधको भूतडामरतन्त्रे लब्धाभिषेको गुरुभिरनु[2]ज्ञातः नदीसङ्गमे श्मशाने वा एकवृक्षे देवायतने श्रीवज्रधरगृहे वा इत्येवमादिस्थाने स्थित्वा साधयेत् । प्रथमं तावत् हस्त-द्वये अकारेण चन्द्रम[3]ण्डलं भावयेत् । तन्मध्ये हुँकारं ज्वालामालाकुलम् । ॐ सिद्धिवज्र हुँ । ततः सर्वपाप-नाशनमन्त्रमुच्चारयेत् । हृदये चन्द्रमण्डलं ध्यात्वा रक्तरेफं बिन्दुसहितं ज्वालामालाकुलं ध्यात्वा इमं मन्त्रमुच्चारयेत् । ॐ हन विध्वंसय नाशय पापं हुँ फट् । अस्य मुद्रा— अन्योन्यमङ्गुलिं वेष्टयित्वा तर्जनीद्वयं प्रसारयेत् तर्जनीसूचीं कृत्वा पापनाशनमुद्रा । अथ समनन्तरं शून्यं भावयेत् । पुनः कुन्दस्फटिकसङ्काशं बोधिचित्तचन्द्रं पश्येत् । ततो हुँकारमष्टदलपद्मं चिन्तयेत् । तदुपरि रँकारेण सूर्य्यमण्डलं तन्मध्ये हुँकारं ज्वालामालाकुलं भावयेत्, अनेन क्रोधावेशेन मन्त्रेणावेशयेत् । ॐ क्रोधा-वेश हुँहुँहुँ अः[4] । अस्य मुद्रा— अन्योन्यमुष्टिं कृत्वा तर्जनीद्वयं वेष्टयेत् क्रोधावेशमुद्रा । पुनरस्यैव मुद्रां बद्ध्वा इदं मन्त्रमुच्चारयेत् । ॐ वज्रावेशय वेशय[5] पातय हुँ । ततः स्वदेवताकायं विचिन्तयेत् ।

---

[1] A भूतडा० ।
[2] AC ०रभि० ।
[3] C चतुर्म० ।
[4] AC omit.
[5] AC वचाप्रयतु ।

ज्वालामालाकुलं दीप्तं युगान्ताग्निसमप्रभम्[1] ।
भिन्नाञ्जनमहाकायं अट्टाट्टहासनादिनम् ॥
[चिन्तयेदिति संक्रुद्धं] त्रैलोक्याधिपतिं प्रभुम् ।
प्रत्यालीढसुसंस्थानमादित्यकोटितेजसम् ।
कल्पानलज्वलच्चक्षुः सन्ध्यार्कमिव वर्तुलम् ॥
ऊर्द्ध्वकेशं महाज्वालं कपालमालामुकुटम् ।
दंष्ट्राकरालवदनं नीलस्वच्छांशुवसनम् ॥
नागाष्टकविभूषितं चतुर्भुजविराजितम् ।
दक्षिणे वज्रमुल्लाल्य [2][तर्ज्जयन् वामपाणिना] ॥
अपराजितापदाक्रान्तं मुद्राबन्धेन तिष्ठति ।
अनामिकाद्वयं वेष्ट्य[3] तर्ज्जनीद्वयं कुञ्चयेत् ॥
कनिष्ठां मध्यमां चैव ज्येष्ठाङ्गुष्ठेन चाक्रमेत् ।
एषा मुद्रा वरा श्रेष्ठा त्रैलोक्यसाधनी परा ॥

ततो वक्ष्यमाणक्रमेण षडङ्गविन्यासं कुर्य्यात्। अन्योन्य-मुष्टिं कृत्वा मध्यमाङ्गुल्यौ प्रसारयेत् शिरोमुद्रा। मन्त्रः ॐ हन वज्र हुँ। अस्या एव मुद्राया मध्यमाङ्गुल्यौ प्रवेशयेत् तर्ज्जनीसूचीं कृत्वा शिखामुद्रा। मन्त्रः ॐ दह वज्र हुँ। अस्या एव मुद्राया अङ्गुष्ठौ पार्श्वतः दक्षिणाङ्गुष्ठं दक्षिणनेत्रे वामाङ्गुष्ठं वामनेत्रे [नेत्रमुद्रा]। मन्त्रः ॐ दीप्तवज्र हुँ। अन्योन्यमुष्टिं कृत्वा कनिष्ठाद्वयं वेष्टयेत्

---

[1] ANC सन्निभम्।

[2] All the MSS read वामे तर्ज्जयन् हरिहरपितामहान्; but this reading is here given after a comparison of the verses in the *Sādhanas* that follow.

[3] ANC वेष्टयित्वा।

तर्ज्जनीं प्रसार्य्य हृदयमुद्रा। मन्त्रः ॐ वज्ररोष हुँ। अस्या एव मुद्रायाः तर्ज्जनीं कुण्डलीकृत्य कवचमुद्रा। मन्त्रः ॐ दृढवज्र हुँ कवचः। अस्या एव मुद्रायास्तर्ज्जनीद्वयं प्रसार्य्य अस्त्रमुद्रा। मन्त्रः ॐ हन दह [1]पच क्रोधवज्र सर्व्वदुष्टान् मारय हुँ फट्। एवं षडङ्गविन्यासं कृत्वा भगवन्त-मावाहयेत्। अन्योन्यान्तरितं कृत्वा तर्ज्जनीद्वयं कुञ्चितं ईषत्[2] चालयेत् आवाहनमुद्रा। मन्त्रः ॐ वज्रधर-महाक्रोध समयमनुपालय शीघ्रमागच्छ ह्रीः जः हुँ फट् स्वाहा। अनेन सर्व्वदेवतामावाहयेत्। एवमावाह्य स्तुति-विशेषं कृत्वाऽर्घपाद्यं दद्यात् अनेन मुद्रामन्त्रेण। उत्तान-मञ्जलिं कृत्वा अङ्गुष्ठौ पार्श्वतः अर्घमुद्रा। मन्त्रः ॐ सर्व्वदेवता प्रसीद भगवन् महाक्रोध प्रतीच्छ स्ववज्रार्घं ॐ हुँ अः। ततः पाद्यं दद्यात् अनेन मुद्रामन्त्रेण। सर्व्वाङ्गुलिं[3] कुण्डलीकुर्य्यात्, अङ्गुष्ठतर्ज्जनीमुखसन्दंशेन[4] पुष्पमादाय निर्मन्थयित्वा भगवतो वामपार्श्वे क्षिपेत्। मन्त्रः ॐ प्रवर[5]संस्कारं प्रतीच्छ स्वाहा। तत आसनं दद्यात्। वामहस्तमुत्तानं कृत्वा ज्येष्ठाङ्गुष्ठेन उच्छ्रितेन दक्षिणहस्त-मुष्टिना वामाङ्गुष्ठं गृह्णीयात् दक्षिणाङ्गुष्ठेन उच्छ्रितेना-पराजितमाक्रम्य वज्रधरस्य भूतासनमुद्रा। मन्त्रः ॐ जय जय क्रोधाधिपत्ति क्रोधराज इति भूतासनं दर्शय रक्ष प्रतिगृह्ण स्वाहा। अथ देवतासनं भवति। सम्पुटाञ्जलिं कृत्वा [6]सर्व्वाङ्गुलिविरलां कृत्वा पद्ममुद्रा। मन्त्रः ॐ

---

[1] AN पञ्च।
[2] A इव।
[3] AC omit.
[4] AC ॰र्षेन।
[5] AN ॰सत्कारं।
[6] A omits सर्व्वाङ्गुलि॰...॰त्सारयां कृत्वा।

पद्मोद्भवनिषण्णाः सर्व्वदेवताः स्वाहा। ततो [1]विघ्नोत्सारणं कृत्वा अनेन मुद्रामन्त्रेण अन्योन्यमुष्टिं कृत्वा अङ्गुष्ठौ प्रसारयेत् [2]आक्षेपमुद्रा। मन्त्रः ॐ नाशय सर्व्वदुष्टान् दह पच दुष्टान् भस्मीकुरु हुँ हुँ फट् फट् (आक्षेपः)। पुनर्द्दिग्बन्धनं कुर्य्यात् अनेन मुद्रामन्त्रेण। अन्योन्यमुष्टिं कृत्वा पृथक् पृथक् वामतर्ज्जनीं प्रसार्य्य दक्षिणबाहुमूले स्थापयेत्, दक्षिणाङ्गुष्ठेन कनीयसीनखमाक्रम्य शेषाङ्गुलीः प्रसारयेत् संक्रुद्धो दिग्बन्धमुद्रा। मन्त्रः ॐ वज्रक्रोध महाचण्ड बन्ध बन्ध दश दिशान् हुँ फट्। ततो भगवतो मूलमुद्रां बद्धा समयं दर्शयेत् वज्राक्षरं दृष्ट्वा अनेन मन्त्रेण— हुँ वज्र फट्। अन्योन्यमुष्टिं कृत्वा कनिष्ठाद्वयं वेष्टयेत्, तर्ज्जनीं प्रसार्य्य अङ्कुशाकारेण सिद्धाकर्षणमुद्रा। मन्त्रः ॐ वज्ररोष महाक्रोध सिद्धा[3]कर्षय हुँ जः। ततो वज्रमुल्लाल्य इदं ब्रूयात्—

क्रोधसिद्धि महाराज सिद्धिसंशयसाधने।
सिध्यन्तु सर्व्वदेवाश्च[4] शीघ्रं सिद्धिमनुत्तराम्॥

अष्टभिः गुह्यपूजाभिः पूजयेत्। ॐ वज्रलास्ये[5] हुँ, ॐ वज्रमाल्ये हुँ, ॐ वज्रगीते हुँ, ॐ वज्रनृत्ये हुँ, ॐ वज्रपुष्पे हुँ, ॐ वज्रधूपे हुँ, ॐ वज्रालोके हुँ। ततः पूजां कृत्वा भगवन्तं स्वशरीरे प्रवेशयेत् वज्रावेशमुद्रां बद्धा, इदं मन्त्रमुच्चारयेत्। ॐ प्रविश हुँहुँहुँ अः। मूलमुद्रां च बद्धा इदं मन्त्रमुच्चारयेत्। ॐ वज्र फट्। ज्ञानसत्त्वं

---

[1] C विप्रो०।
[2] AC अत्तय०।
[3] AC ०करिषय।
[4] AC add मे।
[5] AC ०लासे।

समयसत्त्वं चाभेदतो भावयेत्। भावनाखिन्नो मन्त्रं जपेत् अखेदतः। खेदे सति पूजां कृत्वा अर्घपाद्यं दत्त्वा अनेन मन्त्रेण स्तुयात्—

सर्व्वसिद्धि महाक्रोध सुखसिद्धिप्रदायक।
दत्त्वा च मन्त्रिणे (महा)सिद्धिं गच्छ सिद्धिमनुत्तराम्॥

अथ मुद्रा भवति[1]— सम्पुटमञ्जलिं कृत्वा किञ्चित् प्रणमित शिरः[2] पूर्णमुद्रा। मन्त्रः ॐ सिद्धिवज्र आपूरय आपूरय सर्व्वसत्त्वानां आशां अमुकसिद्धिं मे प्रयच्छ हुँ। अनेनोच्चारितमात्रेण सर्व्वमुद्रा दृढीभवन्ति। पद्ममुद्रां च बद्धा वामाङ्गुष्ठं समुत्क्षिप्य विसर्ज्जयेत् अनेन मन्त्रेण— ॐ सर सर विसर विसर गच्छ गच्छ श्रीवज्रधरः समाज्ञापयति स्वाहा। विसर्ज्जयन् कवचमुद्रां बद्धा हृदूर्णाकण्ठमूर्द्धसु बाहुमूलद्वयेन[3] रक्षां कृत्वा तदहङ्कारेण विहरेदिति।

॥ भूतडामरसाधनं समाप्तम् ॥

---

[1] AC ०वेत्। [2] C ०गिराः। [3] C द्वयरक्षा।

## 266.

नमः श्रीभूतडामराय ।

प्रणम्य [1]डामरं क्रोधं भूतदर्प्पविनाशनम् ।
तस्यैव साधनं वक्ष्ये यथालब्धोपदेशतः ॥

प्रथमं तावद् हस्तद्वये चन्द्रमण्डलं विभाव्य तन्मध्ये हुँकारं ज्वाला[2]मालाकुलं ध्यात्वा इमं मन्त्रं उच्चारयेत्—ॐ [3]सिद्धिवज्र हुँ । ततो मुद्रां बन्धयेत् । अन्योन्याङ्गुलिं वेष्टयित्वा तर्ज्जनीद्वयं सूचिवत् प्रसारयेत्[4] । हृदये चन्द्रमण्डलं विचिन्त्य तत्र रक्तरेफं रक्तबिन्दुसहितं ज्वालामालाकुलं ध्यात्वा इमं सर्व्वपापनाशनमन्त्रमुच्चारयेत्—ॐ हन विध्वंसय विध्वंसय नाशय नाशय पापं हुँ फट् । ततः समनन्तरं शून्यं भावयेत्, पुनः कुन्दस्फटिकसङ्काशं बोधिचित्तचन्द्रं पश्येत्, तत्र मध्ये हुँकारम् । ह्रीःपरिणतमष्टदलकमलं विचिन्त्य तदुपर्य्यकारनिर्यातं चन्द्रमण्डलम् । तत्रैव हुँकारं ज्वालामालाकुलं विभाव्य क्रोधावेशमुद्रां मन्त्रेणावेशयेत् । अन्योन्यमुष्टिं बद्ध्वा तर्ज्जनीद्वयं वेष्टयेत् । ॐ क्रोधावेश हुँ अः । तस्याः प्रभया सञ्चोद्याविश्य तस्मिन्नेवानेकक्रोधविग्रहान् प्रविशतश्चिन्तयेत् । तत्पुण्यज्ञानाभिनिवृत्तं पञ्चसूचिकं ज्वालावज्रं नीलमनेकरश्म्युपेतं ज्वालामालाकुलं विभावयेत् । तद्व[5]ज्रादनेकक्रोधादयो दशदिङ् निश्चार्य्य सर्व्वसत्त्वार्थऋद्ध्यादिं कुर्व्वतः पश्यन् तामेव मुद्रामभिमुखमाकर्षयन् मन्त्रमुच्चा[6]रयन् तस्मिन्

---

[1] AC भूतडा० ।
[2] N ०कुलाकुलं ।
[3] C वज्रसिद्धि ।
[4] AC omit.
[5] AC ०ज्ञानेक० ।
[6] AN ०रयेत् ।

वज्रे प्रविशतश्चिन्तयेत्। ॐ वज्रावेशा[1]वेशय पातय हुँ।
ततो महाक्रोधरूपम्—

आत्मानं पश्येत् रौद्रं ज्वालामालाकुलप्रभम्।
चतुर्भुजं महाक्रोधं भिन्नाञ्जनसमप्रभम्॥
दक्षिणे वज्रमुल्लाल्य तर्ज्जयन् वामपाणिना।
दंष्ट्राकरालवदनं नागाष्टकविभूषितम्॥

[2]अनन्तब्रह्मसूत्रं वासुकिकटिसूत्रं शङ्खपालवलयं अपरे चैते मुक्ता वामकरे कुलिकवलयं पारावताभनन्दोपनन्दौ कुण्डलौ कण्ठे तक्षककेयूरानपरे चैते पीता रक्तपद्म-महापद्मनूपुरं कृष्णकर्कोटकशिरोवेष्टनम्—

कपालमालामुकुटं त्रैलोक्यमपि नाशनम्।
[3]अट्टहासं महानादं त्रैलोक्याधिष्ठितं प्रभुम्॥
प्रत्यालीढसुसंस्थानं आदित्यकोटितेजसम्।
अपराजितपदाक्रान्तं मुद्राबन्धेन तिष्ठति॥
अनामिकाद्वयं वेष्ट्य तर्ज्जनीद्वयं कुञ्चयेत्।
कनिष्ठां मध्यमां चैव ज्येष्ठाङ्गुष्ठेन चाक्रमेत्।
एष मुद्रावरः श्रीमान् त्रैलोक्य[4]राज्यसाधनम्॥

ततः क्रोधाधिपतिः क्रोधराजमुद्रामन्त्रैः षडङ्गविन्यासं कुर्य्यात्। अन्योन्यमुष्टिं कृत्वा मध्यमाङ्गुल्यौ प्रसारयेत्—शिरोमुद्रा। मन्त्रः, ॐ [5]हनवज्र हुँ। अस्या एव मुद्राया मध्यमाङ्गुल्यौ प्रवेश्य तर्ज्जनीं सूचीं कृत्वा शिखामुद्रा। मन्त्रः, ॐ दहवज्र हुँ। अस्या एव मुद्राया अङ्गुष्ठौ पार्श्वतः

---

[1] AC प्रोषय। [2] N मुक्तम॰। [3] ANC अट्टाट्ट॰।
[4] C ॰राज॰। [5] A वज्रहन।

दक्षिणाङ्गुष्ठं दक्षिणनेत्रे वामाङ्गुष्ठं वामनेत्रे [नेत्रमुद्रा]। ॐ दीप्तवज्र हुँ। अन्योन्यमुष्टिं कृत्वा कनिष्ठाद्वयं वेष्टयेत् तर्ज्जनीं प्रसार्य्य हृदयमुद्रा। मन्त्रः, ॐ वज्ररोष हुँ। अस्या एव मुद्रायास्तर्ज्जनीं कुण्डलीं कृत्वा कवचमुद्रा। मन्त्रः, ॐ दृढवज्र हुँ। द्वे तर्ज्जन्यौ प्रसार्य्य [1]अस्त्रमुद्रा। मन्त्रः, ॐ हन दह [2]पच क्रोधवज्र सर्वदुष्टान् मारय हुँ फट्। ततो वज्रक्रोध[3]मावाहयेत्। अन्योन्यान्तरितं कृत्वा तर्ज्जनीद्वयं कुञ्चितम्। ॐ वज्रक्रोध समयमनुपालय शीघ्र-मागच्छ ह्रीः ह्रीः जः हुँ फट् स्वाहा। ततोऽर्घमुत्तानमञ्जलिं कृत्वाऽङ्गुष्ठौ पार्श्वतः कारयेत्। ॐ सर्व्वदेवता प्रसीद भगवन् महावज्रक्रोध अर्घं प्रतीच्छ हुँ अः। तत आसनं दद्यात्। वामहस्तमुत्तानं कृत्वा ज्येष्ठाङ्गुष्ठमुच्छ्रितदक्षिण-हस्तमुष्टिना वामाङ्गुष्ठं गृह्णीयात् दक्षिणाङ्गुष्ठमुच्छ्रियते। ॐ जय जय महाक्रोधाधिपति क्रोधराज इदं भूतासनं दर्शय रक्ष प्रतिगृह्ण स्वाहा। सम्पुटाञ्जलिं बद्ध्वा सर्व्वाङ्गुलिं विरली[4]कृत्वा पद्ममुद्रा विधीयते— आसनमुद्रा। मन्त्रः, ॐ पद्मोद्भवनिषण्णाः सर्व्वदेवताः स्वाहा। तत आक्षेपं कुर्य्यात्। अन्योन्यमुष्टिं कृत्वा अङ्गुष्ठं प्रसार्य्य वाममुष्टिं हृदि स्थाप्य दक्षिणमुष्टिं प्रहाराभिनयेनोपस्थाप्य मन्त्र-मुच्चारयेत्। ॐ नाशय सर्व्वदुष्टान् दह पच दुष्टान् भस्मीकुरु हुँ हुँ फट् फट्। ततो दिग्बन्धं कुर्य्यादनेन मन्त्रेण। अन्योन्यमुष्टिं कृत्वा पृथक् पृथक् वामतर्ज्जनीं प्रसार्य्य दक्षिणबाहुमूले स्थापयेत्, दक्षिणाङ्गुष्ठेन कन्यसानख-

---

[1] AC चक्र०, B वज्र०।
[2] AC पच्च।
[3] AC ०माह्व०।
[4] AN ०लिर्विरला:।

माक्रम्य शेषाङ्गुलीः प्रसार्य्य दशसु दिक्षु भ्रामयेत्। ॐ वज्रक्रोध महाचण्ड बन्ध दशदिशं हुँ हुँ फट् फट्। ततो वज्रमुल्लालयन् इदमुच्चारयेत्।

क्रोधसिद्धि महाराज सिद्धिसंशयसाधने।
सिध्यन्तु सर्व्वदेवाश्च शीघ्रं सिद्धिमनुत्तराम्॥

[1]षोडशलास्यापूजाभिः पूजयेत्। क्रोधराजमूलमुद्रां बद्ध्वा हुँ [2]वज्र फट्। दृश्य[3]समयं दद्यात्। ततो भगवतः पूजां कृत्वा क्रोधावेशमुद्रां बद्ध्वा वज्रक्रोधं स्वशरीरे [4]प्रवेशयेत्। ॐ प्रविश वज्रक्रोध हुँ हुँ हुँ आः ज्वालामालाकुलभीषण-वज्र आः। स्व[5]देहे अन्तर्भाव्य कवचादिकं कृत्वा सर्व्व-मेतत् पूरणार्थं सम्पुटाञ्जलिं बद्ध्वा पूरणमन्त्रमुच्चारयेत्। ॐ सिद्धिवज्र आपूरय आपूरय हुँ फट्। अनेन सर्व्व ऊनातिरिक्ताः परिपूर्णा भवन्ति। ततो वज्रक्रोधोऽहं इत्य-[6]हङ्कारमुत्पाद्य सर्व्वसिद्धिमाकर्षयेत्। अनेन मुद्रामन्त्रेण अन्योन्यमुष्टिं कृत्वा कनिष्ठाद्वयं वेष्टयेत्, तर्ज्जनीं प्रसार्य्य कुण्डलीं कृत्वा किञ्चिच्चालयेत्— ॐ वज्ररोष महाक्रोध-सिद्ध आकर्षय हुँ जः। ततः स्वहृदये चन्द्रमण्डलस्थान् ऊर्द्ध्वशिखान् अ[7]क्षरान् विचिन्त्य नीलालीमिव पङ्क्तितः ॐ [8]वज्र फट्। ततः सरोमकूपेभ्यः क्रोधविग्रहं स्फुरत्संहार-कारकं विचिन्तयेत्। भावनाखिन्नो जपमारभेत तन्मान-सो वर्णगतैकचित्तो जपेत्। खिन्ने क्रोधविग्रहं स्वहृदयेऽन्त-

---

[1] AC omit षोडश०...पूजयेत्।
[2] B वज्रस्फट्।
[3] AC दृशं, N दृशा।
[4] AC omit.
[5] AC ०देहम०।
[6] AC ०ग्राहङ्का०।
[7] ANC ०नेतान्य०।
[8] ANC ऊँ।

र्भाव्य सम्पुटाञ्जलिं [1]बद्धा सर्व्वसिद्धिं प्रार्थयेत्, सिद्धिवज्र आपूरय सर्व्वसत्त्वानामाशां सर्व्वसिद्धिं मे प्रयच्छ हुँ जः[2]। ततः पद्ममुद्रा द्वाभ्यां अङ्गुष्ठाभ्यां चालयेत् सर्व्वदेवता-विसर्ज्जनमुद्रा। मन्त्रः, ॐ सर सर विसर विसर [3]गच्छ गच्छ, सर्व्वदेवतान् श्रीवज्रधरः समाज्ञापयति स्वाहा। ततः स्वशरीरं कवचयित्वा क्रोधाहङ्कारमानसो विहरेद् यथासुखं इत्यनेन क्रमेण। मन्त्रलक्षं जपेत्, क्षिप्रं सिध्यति। अथ मन्त्री अभिषिक्तोऽनुज्ञातः कृतपूर्व्वसेवो वज्रधरं साधयितु-कामो मासमेकं त्रिसन्ध्यं सहस्रमेकं जपेत्। ततः पूर्ण-मास्यां यथाविभवतः पूजां कृत्वा सुसमाहितः क्रोधमुद्रां बद्धा सकलां रात्रिं जपेत्। ततः प्रभाते भूः कम्पते, मुद्रा ज्वलति, ज्वलितमात्रेण वज्रधरसदृशो भवति, अजरामरदिव्यरूपी भवतीत्याह भगवान् वज्रधरः।

॥ संक्षिप्तसम्पूर्णविस्पष्टक्रमसङ्क्षतभूतडामर[4]-
साधनोपायिका
सकलस[5]त्त्वोत्तारणहेतोस्त्रैलोक्यवज्र[6]रचिता समाप्ता ॥

---

[1] ANC कृत्वा। [2] N adds पूर्व्वोक्तं पूजयेत् after this.
[3] C omits गच्छ गच्छ। [4] B ॰डामरोपायिका।
[5] C ॰त्त्वोद्धा॰। [6] B ॰चरिता॰।

## 267.

[1]नमो भूतडामराय।

प्रज्ञोपायमयं क्रोधं बोधिचित्तसमुद्भवम्।
प्रणम्याराधनं वक्ष्ये भूतडामरसंज्ञकम्॥

तत्र भावसाधकः प्रविष्टमण्डलः सर्व्वसमयाभिषिक्तोऽनुज्ञातश्च क्वचित् गिरिगह्वरादौ मनोऽनुकूले प्रदेशे पटादिगतमूर्त्तिं भगवन्तं धूपादिबाह्याध्यात्मिकपूजाभिः सम्पूज्य पापदेशनादिकं कुर्य्यात्।

रत्नत्रयं मे शरणं सर्व्वं प्रतिदिशाम्यघम्।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः॥

इति। हस्तद्वये अकारेण चन्द्रमण्डलं तदुपरि ज्वलत्हुँकारं ध्यात्वा सम्पुटाञ्जलिं कुर्व्वन्निदं वदेत् ॐ सिद्धवज्र हुँ। ह्रीःकारेण कण्ठेऽष्टदलं पद्मं जिह्वादले हुँकारेण शुभ्रवज्रं वज्रादिजिह्वेत्यधितिष्ठेत्। स्थानरक्षां विदध्यात् अनेन विधिना। तत्रायं विधिः— हुँकारमुच्चारयन् झटिति क्रोधराजमात्मानं निष्पाद्य रक्तसूत्रावबद्धरक्तपुष्पमालादिविभूषितानयोमयादिकीलकान् हुँकारनिष्पन्नान् प्रावृण्मेघनिभान् नाभिदेशादधः शूलाकारानूर्द्ध्वक्रोधाकृतीन् अधो विघ्नान् तीक्ष्णकीलेन मन्त्रमुच्चारयन् ॐ घ घ घातय घातय सर्व्वदुष्टान् कीलय कीलय सर्व्वपापान् फट् हुँ हुँ हुँ वज्रधर आज्ञापयति सर्व्वदुष्टकायवाक्चित्तं कीलय हुँ फट्।

---

[1] This *Sādhana* is to be found in Ab only. *See* folia 40 et. seq.

आःकारजं च तस्याग्रे रविबिम्बकरोज्ज्वलम् ।
दिक्षु सर्व्वासु कीलानि रश्मिज्वालानि चिन्तयेत् ॥

तैश्च परम्परावबद्धपञ्जरान्तर्गतं स्वहृदये अँकारेण सूर्य्यं तच्चोपरि कल्पाग्निरिव रँकारमिति विन्यस्य अन्योन्याङ्गुष्ठं प्रवेष्टव्यं तर्ज्जन्यौ द्वौ प्रसार्य्य ललाटादारभ्य पापास्फोटयोगेन स्फोटयेत् । ॐ हन विध्वंसय नाशय पापान् हुँ फट् इत्यनेन सन्दह्य आत्मानं बाह्याध्यात्मिकविकल्पपापाश्च स्फाव्य ग्राह्यग्राहकविनिर्म्मुक्तं गगनमिव चिन्तयेत् । ततो—

विधूतकल्पनाचित्तं स्वसंवेद्यं प्रभास्वरम् ।
हृत्कृतानन्दहुँकारं होकाराभ्यां विदर्भितम् ॥
मदधातुसमाक्रान्तं चित्तमात्रप्रभावितम् ।
स्वचित्तेनैकतां कुर्य्यात् तीक्ष्णैः किरणसञ्चयैः ॥

प्रतिबिम्बवत् अर्द्धेन्दुसंयुक्तं पश्येत् । तत अकारादिस्वरादीन् रविमण्डले न्यस्य ह्रस्वस्वरान् पापकान् दीर्घान् प्रज्ञात्मकान् निश्चार्य्य बुद्धविकुर्व्वितान् कृत्वा पुनस्तेषां स्वररश्मिषु स्वेनैव विशतः कलायोगेन व्यवस्थितान् चिन्तयेत् । ककारादीन् पश्चात् तेनैव न्यायेन ङञणनमवर्ज्जितांस्तथैव बोधिपक्षान् विचिन्तयेदिति । ततः पञ्चवर्णकान् बुद्धान् संस्फार्य्य प्रवेश्यानेकगभस्तिमितं सितपद्मं पश्येत् । तस्योपरि श्रीक्रोधराजः हुँ इत्युच्चार्य्य ज्वालाकृष्टं आत्मानं भावयेत् । क्रोधावेशः— ततः क्रोधवज्रोऽहमित्यहङ्कारं कुर्य्यात् । तत्कुलं पुनः निश्चार्य्य प्रवेश्य श्रीभूतडामरोऽहमिति निश्चयमुत्पाद्य ॐ वज्रावेशय पातय हुँ । क्रोधावेशेन च मन्त्रयुक्तो वज्रावेशः । तत आत्मानं

वज्रक्रोधं निश्चित्य समयोऽहं समयमुद्रां बद्धा समयसत्त्वं तिष्ठस्व मामिति वदेत्।

अनामिकाद्वयं वेष्ट्य तर्ज्जनीद्वयं कुञ्चयेत्।
कनिष्ठां मध्यमां चैव ज्येष्ठाङ्गुष्ठेन[1] चाक्रमेत्॥

अस्य मन्त्रः— ॐ वज्र फट्। हृद्भ्रूयां गले मूर्ध्नि प्रतिष्ठाप्याधितिष्ठेत्। ततः षडङ्गविन्यासं कुर्य्यात् तन्मुद्रामन्त्रैः। अन्योन्यमुष्टिं कृत्वा मध्यमाङ्गुलिं प्रसारयेत् शिरोमुद्रा। मन्त्रः, ॐ हनवज्र हुँ, शिरः। अस्या एव मध्यमाङ्गुल्योः प्रवेशं कृत्वा शिखामुद्रा। मन्त्रः, ॐ दहवज्र हुँ, शिखा। अस्या एव मुद्राया अङ्गुष्ठौ पार्श्वतः दक्षिणं दक्षिणे वामं वामे नेत्रमुद्रा। मन्त्रः, दीप्तवज्र हुँ, नेत्र। अन्योन्यमुष्टिं कृत्वा कनिष्ठिकाद्वयं वेष्टयेत्। तर्ज्जनीं प्रसार्य्य हृदयमुद्रा। हुँकाराधिष्ठितं क्रोधवज्रं हृदये ध्यात्वा ॐ वज्ररोष हुँ, हृदयम्। अस्या एव मुद्राया तर्ज्जनीं कुण्डलीं कृत्वा कवचमुद्रा। मन्त्रः, ॐ दृढवज्र हुँ, कवच। अस्या एव मुद्रायाः तर्ज्जनीद्वयं प्रसार्य्य अस्त्रमुद्रा। मन्त्रः, ॐ हन दह पच क्रोधवज्र दुष्टान् मारय मारय हुँ फट्, अस्त्रमन्त्रः। त्रिरुच्चार्य्य हुँ अः ब्रुवन् पुरतः सूर्य्यमण्डले नीलं क्रोधराजं न्यस्य वज्रोऽहमिति वाग् ब्रुवन् परावृत्तितः क्रोधक्रोधोऽहमिति भावयेत्। ततो भगवन्तं सर्व्वदेवताभिः सहावाहयेत्। अन्योन्यान्तरितं कृत्वा तर्ज्जनीद्वयं कुञ्चितं ईषच्चालयेदङ्गुष्ठाभ्यां

---

[1] MS reads as ज्येष्ठाङ्गुष्ठक्रमेण।

तर्ज्जन्यावाकर्षयेत्। ॐ वज्रमहाक्रोध समयमनुपालय भगवन् शीघ्रमागच्छ सर्व्वदेवताभिः सह ह्रीः जः हुँ फट् स्वाहा।

॥ भूतडामरसाधनं समाप्तम् ॥

---

268.

नमो यमान्तकाय।

आदौ तावत् सुखासनोपविष्टः साधको रक्ता[1]कारनिष्पन्नं सूर्य्यमण्डलं स्वहृदये विभाव्य तदुपरि रक्तहुँकारं विन्यस्य पुरतो रक्तयमारिं [2]वक्ष्यमाणाकृतिं गुरुबुद्धबोधिसत्त्वांश्चालम्ब्य पुष्पादिभिः सम्पूज्य नमस्कृत्य त्रिशरणगमनादिकं कृत्वा शून्यतां भावयेत् ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति। तदनन्तरं रक्त[3]आकारजसूर्य्यमण्डलोपरि हुँकारं तत्परिणतं सार्द्रमुण्डाङ्कितं सितदण्डं हुँकाराधिष्ठितं विभावयेत्। एतत् सर्व्वं परिणम्य यमान्तकं विचिन्तयेदात्मानं रक्तवर्णं प्रत्यालीढपदस्थितं[4] एकमुखं द्विभुजं वामकरेण रक्तपरिपूर्णकपालं दक्षिणकरे मुण्डाङ्कितसितदण्डधरं [5]सर्प्पाभरणभूषितं भयानकं पिङ्गलोर्द्ध्वकेशं गलद्व्याघ्रचर्म्माम्बरं स्वाभप्रज्ञया विचित्राभरणयाऽऽली[6]ढपदस्थितया आलिङ्गितमात्मानं भावयेत्। पश्चात् भगवतो हृदि सूर्य्यमण्डलं हुँकाराधिष्ठितं तत्परि-

---

[1] N ०ङ्का०। [2] BNAb omit. [3] N आङ्का०।
[4] Ab स्थिते पदे। [5] A सर्व्वा०। [6] AC ०माली०।

णतं सार्द्रमुण्डाङ्कितं सितदण्डं निश्चलं विभाव्य तन्मध्ये रक्तसूर्य्यमण्डलस्थहुँकारं रक्तवर्णं [1]विभावयेत्। ततो गुह्यवज्रं हुँकारपरिणतं भगवत्या गुह्याष्टदलकमलं रक्त-आःकारेण। तदनु मन्त्रमुच्चारयेत् ॐ सर्व्वतथागतानुरागेण[2] वज्रस्वभावात्मकोऽहम्। तदनु नाभेरधः सद्रक्ताष्टदलकमलोपरि रक्तह्रीँकारं ज्वलन्तं विचिन्तयेत्। प्रज्ञा तु मदविह्व[3]ला गलदंशुका द्विभुजैकमुखी भगवता सह सम्पुटयोगेनावस्थिता। एवम्भूतं रक्तयमारिं महिषोपरि विश्वदलकमलस्थं भावयेत् समयादिविधिपूर्व्वकम्। एतत् द्विचितुःसन्ध्यं भावयेदिति। वुँ आँ जिँ खँ हुँ समयाधिष्ठानमन्त्रः। ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् स्वाहा, मूलमन्त्रः। ॐ यमान्तक हुँ, हृदयमन्त्रः।

॥ आर्य्यरक्तयमारिसाधनम्[4] ॥

---

[1] Ab चिन्त०।   [2] Ab ०रागण।

[3] AC ०विकृ०।   [4] A gives the name of the author in the following words: कृतिरियं सिद्धाचार्य्यविरूपाज्ञ-पादानामिति, which is omitted in all other MSS., *viz.*, C, Ab, N and B.

269.

तथैव पापदेशनादिपूर्व्वकं शून्यतां विचिन्त्य रक्त-आकारजसूर्य्ये रक्तहुँकारं तत्परिणतं सार्द्रपीतमुण्डाङ्कित-सितदण्डं हुँकाराधिष्ठितं भावयेत्। तत्परिणामेनात्मानं यमान्तकमेकमुखं द्विभुजं प्रत्यालीढपदं रक्तपरिपूर्ण-कपालवामकरं सार्द्रपीतमुण्डाङ्कितसितदण्डदक्षिणकरं नागाभरणविभूषणं पिङ्गलोर्द्ध्वकेशं व्याघ्रचर्म्माम्बरधरं अक्षोभ्यमुकुटिनं [1]स्वाभप्रज्ञालिङ्गितं महिषोपरि विश्व-दलकमलसूर्य्यस्थं ध्यायात्, भगवतीं च द्विभुजैकमुखीं विचित्राभरणामालीढपदस्थितां [2]मदविह्वलां स्खलद्व्याघ्र-चर्म्मांशुकां भगवता सह सम्पुटयोगेन प्रत्यालीढेनावस्थितां एवं विचिन्त्य हृदि सूर्य्यमण्डले [हुँ]परिणतमुण्डाङ्कित-सितदण्डं सूर्य्यस्थहुँकारमध्यं विभावयेत्। ततो भगवतो हुँकारपरिणतं वज्रं भगवत्याश्च आःकारपरिणतं पद्मं विभाव्य ॐ सर्व्वतथागतानुरागेण वज्रस्वभावात्मकोऽह-मित्यधितिष्ठेत्। तदनु नाभेरधः [3]सद्रक्ताष्टदलकमलोपरि[4] रक्तह्रीँकारं ज्वलन्तं चिन्तयेत्। ततः वुँ आँ जिँ खँ हुँ इति मन्त्राक्षरैः समयद्रव्यसेवापूर्व्वकं द्विचितुःसन्ध्यं भावयेत् इति। मन्त्रजापः— तद्यथा, ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् स्वाहा। ॐ यमान्तक हुँ।

॥ आर्य्यरक्तयमारिसाधनं समाप्तम् ॥

---

[1] A स्वाहा०।
[2] N मदन०।
[3] N वमद्र०।
[4] AC ०ग्रतं।

270.

ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् स्वाहा। ॐ यमान्तकृत्[1] हुँ हुँ फट् फट्। आदौ तावन्मन्त्री सुखासनोपविष्टः रक्तआकारनिष्पन्नं सूर्य्यमण्डलं स्वहृदि विभाव्य तन्मध्ये रक्तहुँकारं भावयेत्। तद्रश्मिनाकृष्टं पुरतो रक्तयमारिमवलम्ब्य गुरुबुद्धबोधिसत्त्वांश्च पुष्पादिभिः सम्पूज्य नमस्कृत्य पापदेशनादिकं कुर्य्यात्। तत्र त्रै[2]धातुकमात्मानं च मायास्वप्नेन्द्रजालसदृशमवलम्ब्य शून्यतां विचिन्तयेत्। ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहमिति चित्तमधितिष्ठेत्। ततो रक्तआकारपरिणतं सूर्य्यमण्डलं तदुपरि रक्तहुँकारपरिणतं सार्द्रमुण्डाङ्कितं सितदण्डं तन्मध्ये रक्तआकारपरिणतं सूर्य्यमण्डलं तन्मध्ये रक्तहुँकारं [3]तत्सर्व्वं परिणम्य यमान्तकरूपमात्मानं चिन्तयेत् रक्तवर्णं प्रत्यालीढपदेन स्थितं दंष्ट्राकराललल्लज्जिह्वं विकृताननं क्रूरनागाष्टविभूषितं ज्वलत्पिङ्गोर्द्ध्वकेशं गलद्व्याघ्रचर्म्माम्बरं रक्तवर्णया विचित्राभरणया प्रज्ञयाऽऽलीढपदेनालिङ्गितं कृत्वा भावयेत्। पश्चात् भगवतो हृदि पूर्व्वबीजपरिणतसूर्य्यं तदुपरि हुँकारं तत्परिणतं सार्द्रमुण्डाङ्कितसितदण्डं निश्चलं भावयेत्। तस्य मुष्टौ सूर्य्यमण्डलस्थहुँकारं रक्तं विचिन्तयेत्। पश्चात् गुह्यवज्रहुँकारपरिणतं सार्द्रमुण्डाङ्कित[4]दण्डं चिन्तयेत् भगवत्या गुह्ये अष्टदलकमलं रक्तआःकारेण। तदनु मन्त्रमुच्चारयेत् ॐ सर्व्वतथागतानु-

---

[1] AC ०न्तक।
[2] AN ततस्त्रै०।
[3] AC तमेव।
[4] AC omit दण्डं...भग०।

रागेण वज्रस्वभावात्मकोऽहम्। तदनु नाभेरधस्तात् रक्ताष्टद[1]लकमलोपरि रक्तह्रीःकारं ज्वलन्तं चिन्तयेत्। भगवानेकमुखो द्विभुजः वामकरेण रक्तपूर्णकपालं दक्षिणे मुण्डाङ्कितसितदण्डधरं महिषोपरि विश्वकमलस्थं भावयेत्, प्रज्ञा तु मदविह्वला गलदंशुका द्विभुजैकमुखी भगवता सह सम्पुटयोगेनावस्थिता। एवम्भूतं यमारिं भावयेत्। त्रिसन्ध्यं चतुःसन्ध्यं वा विभाव्य बलिं दद्यात्। वुँ आँ जिँ खँ हुँ, समयाधिष्ठानमन्त्रः। ॐ ख ख खाहि खाहि सर्व्वयक्षराक्षसभूतप्रेतपिशाचोन्मादकुम्भाण्डापस्मार[2]डाकडाकिन्यादय इमं बलिं गृह्णन्तु समयं रक्षन्तु सर्व्वसिद्धिं प्रयच्छन्तु यथैवं यथेष्टं भुञ्जथ पिबथ मातिक्रमथ सर्व्वसिद्धये सहायका भवथ हुँ हुँ फट् फट् स्वाहा—सार्वभौतिकबलिमन्त्रः। रक्तकृष्णपीतसितवर्णं कर्म्मानुरूपतो ध्येयम्। ततो जापमनुस्मरेत् ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् [3]फट् देवदत्तस्य शान्तिं कुरु नमः स्वाहा। पुष्टौ वौषट्, आकृष्टौ जः, वुँ मोहे, होः वश्ये, लँ स्तम्भे, हुँ फट् प्रेरणे, हुँ निग्रहे, अपराभ्यामुच्चाटनम्। एवं स्तम्भादीनि कर्म्मप्रसराणि विदर्भयेत्।

शान्तिके रोचनया रक्षा भवति। सितनेत्रकर्प्पटे भूर्ज्ज[4]वंशत्वचविधौतकर्प्पटे वा चक्रद्वयमभिलिख्य[5] नमस्कारविदर्भितं अकालमूलादिरहिते शरावसम्पुटेऽवस्थाप्य घृतमधुमध्ये प्रक्षिप्य सितसूत्रेण वेष्टयित्वा त्रिसन्ध्यं शुक्ल-

---

[1] AC काष्ठद०। [2] AC omit ०डाक०।
[3] AC omit the second फट्। [4] AN ०कर्पटभुजे।
[5] AC ०द्वयं लिख्य।

पुष्पेणार्चयित्वा पूर्व्वाभिमुखं सितवर्णं यमान्तकरूपं ध्यात्वा पुरतश्चन्द्रमण्डलोपविष्टं साध्यं दृष्ट्वा सितकलशैः चन्द्रामृतपरिपूर्णैरभिषिञ्चयन्तं ध्यात्वा मन्त्रं जपेत् ॐ ह्रीः ष्ट्रीः विकृतानन देवदत्तस्य शान्तिं कुरु नमः स्वाहा।

शान्तिकविधिः।

पुरुषाणां शान्तिके पौष्टिके वा कुङ्कुमेन चक्रद्वयमभिलिख्य वौषट्कारसहितं घृतमधुमध्ये प्रक्षिप्य शरावसम्पुटमध्येऽवस्थाप्य पीतसूत्रेण वेष्टयित्वा त्रिसन्ध्यं पीतपुष्पैरर्चयित्वा उत्तराभिमुखं पीतवर्णां यमान्तकमूर्त्तिमवलम्ब्य पीतवर्णचतुर्मण्डलमध्यस्थं पीतकनककलशैः पीतवर्णामृतै[1]रभिषिञ्चयन्तं ध्यात्वा मन्त्रं जपेत् ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् देवदत्तस्य पुष्टिं कुरु वौषट् स्वाहा।

पौष्टिकविधिः।

भूर्ज्जे कर्प्पटे वा अलक्तकरक्तचन्दनेनानामिकारक्तमिश्रेण चक्रद्वयमभिलिख्य होःकारनामसहितं विदर्भ्य सुपरिपक्वलोहितशरावसम्पुटेऽवस्थाप्य घृतमधुमध्ये प्रक्षिप्यारक्तपुष्पैरभ्यर्च्य पश्चिमाभिमुखं रक्तयमारिरूपमात्मानं ध्यात्वा रक्तचन्द्रमण्डलमध्यस्थं साध्यं विचिन्त्य स्वकायनिर्गतरश्मिनाभिषिच्य विह्वलीभूतं पादयोर्निपतितं विचिन्त्य मन्त्रं जपेत् ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् देवदत्तस्य [2]कृते यज्ञदत्तं वशं कुरु होः[3] स्वाहा। यदि वशं न गच्छति तदा घृतमधुरहितं तमेव चक्रं[4]

[1] AC ०वर्णसूत्रै०।
[2] Omitted in AC.
[3] C omits वशं कुरु होः स्वाहा।
[4] AC add वह्निना।

निर्धूमाङ्गारेण तापयेत् ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् देवदत्तस्य कृते यज्ञदत्तं वशं कुरु ह्रोः इति मन्त्रं जपेत् ।

वश्यविधिः ।

श्मशानकर्पटे रजस्वलाकर्पटे वा लाक्षारसमिश्रेण चक्रद्वयमभिलिख्य जःकारह्रीःकारेण नामाक्षरसहितेन विदर्भ्य स्त्रीक[1]पालसम्पुटेऽवस्थाप्य रक्तपुष्पैरभ्यर्च्य सन्ध्यार्कनिभं यमान्तकरूपमात्मानं रक्तवर्णाङ्कुशपाश-धारिणं ध्यात्वा तस्य हृदयं अङ्कुशेन विद्धा पाशेन गलके बद्धा आगच्छन्तं चिन्तयेत् । यदि नागच्छति तदा खदिराग्निषु तापयेत्, मन्त्रं जपेत् । इति कर्मप्रसराणि तन्त्रे ज्ञातव्यानि ।

॥ रक्तयमारिसाधनं समाप्तम् ॥

---

271.

त्रैलोक्याभयदाननिर्म्मिततनुं[2] सौम्यस्वभावा[3]श्रयं
रक्ताकारकरं भयङ्करव[4]पुर्विश्वार्थसम्पादकम् ।
नत्वा मारचमूं चमत्कृतिकरं श्रीरक्तकालद्विषं[5]
व्यक्तं[6] विस्तरोक्तिमात्मन इदं तत्साधनं लिख्यते ॥
मन्त्र्यादौ सुखविष्टरः स्वहृदये रक्तं रवेर्म्मण्डलं
रक्ता[7]कारजमन्त्ररक्तमसमं[8] हुँकाररूपं ज्वलत् ।

---

[1] AC ०चित्र० ।
[2] Ab ०तनु० ।
[3] Ab स्वयं ।
[4] AC ०पूर्व्वस्वार्थ० ।
[5] AC ०विश्वं० ।
[6] Ab स्वल्पं ।
[7] AC ०ङ्कार०, N ०ङ्कार० ।
[8] Ab ०मन्त्रसमयं ।

तत्संस्फारितरक्तरश्मिगहनाकृष्टांश्च बुद्धान् गुरून्
श्रीमद्रक्तयमान्तकादिसहितानालम्ब्य हुँकारतः ॥
नानापुष्पसुगन्धधूपविविधाकारेण पूजाविधिं
निष्पाद्यात्मगतं यदस्ति कलुषं तद् देशयेत् तत्पुरः[1] ।
पश्चात् शेषविधिं विधाय विधिवत् तच्छू[2]न्यतां भावयेत्
ॐ शून्यादिकगाथया तदनु रक्ताकारजातारुणे[3] ॥
हुँकारेण विनिर्मितं शशधराभं सार्द्रमुण्डाङ्कितं
दण्डं हुँकृतिभूषितं च सकलं चैतत् चिरं वीक्ष्य च ।
श्रीमद्रक्तयमान्तकं निजतनुं सञ्चिन्तयेत् भावकः
प्रत्यालीढपदस्थितातिविकृतं रक्ताङ्गमत्यद्भुतम् ॥
क्रुद्धं[4] चैकमुखं भुजद्वययुतं सव्येतरे [5]संस्थितं
रक्तापूर्णकपालकं[6] तदनु वै सव्ये च मुण्डाङ्कितम् ।
[7]दण्डं शुभ्रतनुं भुजङ्गनि[8]चयैः प्रारब्धशोभाविधिं
पिङ्गोर्द्धस्थशिरोरुहं कृतगलच्चर्माम्बरं द्विपिनः ॥
प्रत्यालिङ्गितकन्धरं सरभसं सत्स्वाभयाङ्क[9]स्थया
श्रोणेर्विच्युतवस्त्रया भुजयुगोपेतैकवक्त्राब्जया ।
गाढा[10]लिङ्गनसम्पुटैकरसया चालीढपादस्थया
पश्चान्नाथहृदि प्रचण्डकिरणं तद्रूपिहुँकारजम् ॥
दण्डं शुक्लतरं च सार्द्रशिरसा युक्तं स्फुरज्ज्वालिनं
तन्मध्ये च सुरक्तहुँकृतिवरं स्फूर्ज्जद्रविस्थं कृती ।

---

[1] ANC त्पुनः० ।
[2] AC ०वच्छू० ।
[3] ANC ०रुणा ।
[4] AC क्रूरं ।
[5] Ab सुस्थि० ।
[6] ANC ०लाङ्कं ।
[7] AC omit three lines from here.
[8] N ०ङ्गम० ।
[9] N०स्तया ।
[10] Ab ०लिङ्गित० ।

पश्येत् गुह्यविशेषणं भगवतो वज्रं च हुँसम्भवं
सद्योजात् परिणामजं भगवतीगुह्याष्टपत्राम्बु[1]जम् ॥

ॐ सर्व्वेति पुनश्च मन्त्रमसमं चोच्चारयेत् साधकः[2]
पश्चान्नाभितलेऽष्टपत्रकमले संरक्तसम्यग्ज्वलत् ।

ह्रीःकारं च विचिन्तयेत् तदुपरि व्यादीर्घरेखां सितां
आकाशाभिमुखं सुरक्तमसमं श्रीमद्यमारिप्रभुम् ॥

भावयेदीदृशं सर्व्वं जग[3]द्रक्षैकमानसम् ।
सैरिभपृष्ठराजीवसमासीनमनुत्तमम् ॥

यथोक्तसमयो युक्तो योगी समयपूर्व्वकम् ।
त्रिसन्ध्यं भावयेत् सर्व्वं शङ्काविगतमानसः ॥

तस्यावश्यमयं जगद्गुरुवरः संसिध्यति ध्यायतो
[4]दुःखाम्भोधिनिमग्न[5]दुःखितजनोद्धारैकचित्तस्थितिः ।
मन्त्री चापि ततः प्रभृत्यनुदिनं देवासुरस्वामिभि-
[6]र्वन्द्योऽलङ्घ्यतरः सुखी स नियतं दुष्टोग्रभूतादिभिः ॥

श्रीमद्रक्तयमान्तकस्य रचनाद् यत् साधनं श्यामलं
पुण्यप्राप्तमतुल्यसद्गुरुवचः[7]पानात् मयाऽऽम्नायतः ।
यद् वैरोचनरक्षितेन जगतः सर्व्वार्थसम्पत्तये
सम्भूयाद् भवपङ्कमग्नवपुषः [8]क्लेशान्धकारद्विषः ॥

---

[1] ANC ०चन्द्राम्बु० Ab ०पात्राम्बु० । [2] ANC ०त्तन्मनाः ।

[3] Ab ०द्दत्तासमाकुलं ।

[4] Instead of this line Ab has—लोकालोककरो विमूढ़करुणः प्रारब्धकोपक्रमः ।

[5] AC ०दुष्ट० । [6] ANC ०र्विघ्नो० ।

[7] AN ०पादा० । [8] ANC रागादिदोष० ।

ॐ आँ जिँ खँ वुँ हुँ, समयाधिष्ठानमन्त्रः । ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट्[1] स्वाहा । ॐ यमान्तक हुँ फट् ।

॥ स्वाधिष्ठान[2]रक्तयमारिसाधनं समाप्तम् ॥

---

272.

नमो रक्तयमार्य्यै ।

प्रत्यालीढपदोर्द्धकेसरसटाकोटिस्खल[3]त्तारका-
कुन्दापीडकरालभोगिपटलालङ्कारभीमास्पदम् ।
उद्यद्दक्षिणपाणिदण्डविकटं प्रज्ञासमालिङ्गितं
नत्वा रक्तयमारिमात्ममतये तत्साधनं ब्रूमहे ॥
स्थित्वा श्मशानवनपर्व्वतगह्वरेषु
मन्त्री मनोज्ञभवनेष्वथ स स्वचित्ते ।
आकारजातमिहिरोपरि रक्तवर्ण-
हुँकारमुच्छलदनन्तघृणिं विभाव्य ॥
तद्रश्मिभिः प्रकटिताम्बरबोधिसत्त्व-
[4]चर्य्यान्तरालगतबुद्धगणं त्वनन्तम् ।
आलम्ब्यमानससरो[5]ज्ञवभूरिपुष्पैः
सम्पूजयेत् तमपि सप्तविधैश्च चित्तैः ॥

---

[1] ANC omit.
[2] Ab omits स्वाधिष्ठान० ।
[3] A ०चल० ।
[4] A चर्य्यावचकान्त० ?
[5] A ०भर० ।

यद् वक्ष्यमाणमतिपाटलपार्व्वणेन्दु[1]-
सन्ध्याद्युतिशमनशत्रुमथ प्रपूज्य ।
मैत्रीकृपानुदितचित्त उपेक्षकोऽसौ
संहृत्य सर्व्वमुदितं खलु धर्म्मधातौ ॥

शरदमलसुदूराकाशसङ्काशशून्यं
सकलमथ विदित्वा मन्त्रपाठं विदध्यात् ।
ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहम् ।
पुनरपि निजकायाकारसत्कायदृष्टिं
स्थगयितुमथ मन्त्री भावयेन्मन्त्रमेवम् ॥

ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम् ।
जगत् त्रातुं पूर्व्वप्रणिधिबलमाश्रित्य सकलं
ततः [2]श्रोणाकारोद्भवतरणिबिम्बं तदुपरि ।
सितं हुँकारं तन्निविडतरदण्डं चलशिरो-
गलद्रक्ताम्लानस्फुटकुसुममालाञ्चितमिव ॥

ततो ध्यायेदेभिः खलु परिणमय्याथ सकलैः
स्वयं वीराकारं विकटकटुदंष्ट्रोत्कटमुखम् ।
त्रिभिर्नेत्रैर्लोकत्रितयभयदं वा भवशिखा-
करालैरट्टाट्टप्रहसितकृतस्फूर्ज्जथुशतम् ॥
हुँकारोद्भवहुँपदाङ्कितसितं दण्डं च सव्ये करे
रक्तापूर्ण[3]कपालहस्तमपरं वन्देऽथ तं दुर्द्दमम् ।

---

[1] A ०यार्च्चिनेन्दु? After this A and C repeat the concluding portion of the previous Sādhana from दुःखाम्भोधिनिमग्न० to the end, which is followed by the present Sādhana.

[2] श्रोना०, C श्राना० ।

[3] C ०करोट० ।

भोगीन्द्रामलवीरपट्टघटनाकाठिन्यपीनोर्द्धगः
प्रेङ्खत्पिङ्गकरालकेशरसटं ध्यायात् प्रभालोहितम्॥
प्रत्यालीढपदाञ्चितैकमहिषो धावत्पदप्रेङ्खित-
स्फारातामसरोजमुग्रशिरसा व्यालम्बिमालाधरः।
कल्पान्तानलतोग्रदीधितिधरं दंष्ट्रान्तरालो ललज्-
जिह्वामूलघनोग्रघोरविसरद् हुँकारपूर्णास्यकम्॥
इत्थं रक्तयमारिमात्मसकलं व्याघ्राजिनैकाम्बरं
व्यग्रोदग्रभुजङ्गबद्धकटिकं भोगीन्द्रकैर्भूषितम्।
ध्यात्वा तन्मनसि प्रचण्डकिरणैर्वज्रहुँकारजातं (?)
ज्वलद्दण्डयुतं समन्तचरणं हुँलाञ्छितं भावयेत्॥
तदनु मदनहृष्टस्वाभया प्रज्ञया तं
प्रभवदरुणहुँक्षणसञ्जद्वयम्।
ऋजुमतिरक्ताःकारजाम्भोजगुह्य-
स्फुरणरभसयाऽऽलिङ्गितं चैकवक्त्रम्॥
स्फुटमिति चरमान्तं सम्पुटाकारयोगं
ग्रहिलविगलदंशुप्रज्ञया श्लिष्टरूपम्।
अधर इह तु नाभेरष्ट[1]पत्रं विभाव्य
प्रसरदरुणवर्णं ह्रीः[2]सिताम्भोजमस्याः॥
पिशङ्गश्मश्रु[3]भीष्मास्यं देवताकारमात्मनः।
विभाव्यैवं महारागदीपकं मन्त्रमापठेत्॥
ॐ सर्व्वतथागतानुरागेण वज्रस्वभावात्मकोऽहम्।
[4]कुप्तं यक्षमहाकालं लोहिताङ्गं यमा[5]न्तकम्।
निध्यायेन्नित्ययोगेन न चिरात् फलमश्नुते॥

---

[1] AC ०यन्त्रं। [2] A ०स्थिता०। [3] A ०भीमास्पदं।
[4] C कुप्तं। [5] A ०न्तेपमा०।

सुगतपञ्चकचञ्चलविग्रहं
स्फुरणसंहरणोद्गतदीधितिम् ।
भुजगराजितमुल्लसत्करं
भयदण्डविमण्डितहस्तकम् ॥
कपिलविद्युदधिद्युतिकेसरं
विशदमुण्डघटाकृतशेखरम् ।
द्विभुजमेकमुखं कृतसम्पुटं
सहजया सदृशप्रभया सह ॥
मदनपञ्चसुधासहपञ्चकैः
ग्लकहनादिभिरुत्तमदीपकैः ।
समयवस्तुभिरेभिरुपागतः
शमनशत्रुमिमं परिभावयेत् ॥
यदि कवित्वसुखित्वसुधीरता
धरणिराज्यमथान्यदपीष्यते ।
तदपि रक्तयमारिसमाधितो
भवति सर्व्वमिहास्ति न संशयः ॥

इत्थं रक्तयमारियोगसहितो योगी व्रजेत् कुत्रचित्
दूरोदारगिरिश्मशानभयद[1]स्थाने तदा दुर्ज्जयः ।
हिंस्रैर्जन्तुभूतैश्च राक्षसबलैर्देवासुरैश्च ज्वलज्-
ज्वालाज्ज्वालजटालकोटिकुलिशालङ्कारपाणिर्यथा ॥
ध्यानात् खिन्नः स मन्त्री [2]जडिमचयघनध्वान्तमुष्टिं ध्वसन्तं
भास्वन्तं मन्त्रराजं तरणिमिव जपेत् चित्तबीजात्
स्फुरन्तम् ।
ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् स्वाहा ।

---

[1] AC ०भयदाव० ।  [2] A जड्रि० ।

सत्त्वानां स्वस्तिहेतो झटिति भगवतो रूपमालम्ब्य योगी
दृष्ट्वा दिक्चक्रपालान् [1]बलिमितिकुलिशाबद्धमुद्रोऽथ
दद्यात् ॥

ॐ इन्द्राय ह्रीः यमाय ष्ट्रीः वरुणाय [2]वि कुवेराय [3]क्ष
[4]ईशानाय त आग्नेये आ नैऋत्ये न वायव्ये न चन्द्राय
हुँ अर्काय हुँ ब्रह्माणीयै फट् वसुन्धरायै फट् वेमचित्रिणे
स्वाहा सर्व्वभूतेभ्यः हा हा ही ही हुँ हुँ हें हें स्वाहा—
बलिमन्त्रः ।

द्रुतमिह भणित्वा साधनं यन्मयाप्तं
कुशलममलमास्तां तेन साप्तः सधर्म्मः ।
भवजलनिधिपारं गन्तुमाबद्धसेतु-
प्रतिनिधिरतिदुःखं (?) जीवलोकचयस्य ॥

॥ आर्य्ययमारिसाधनं समाप्तम् ।

। कृतिरियं पैण्डपातिकभिक्षुगुणाकरगुप्तपादानामिति ॥

---

[1] A चलि० ।
[2] AC श्रेम ।
[3] AC ऊँ ।
[4] C इन्द्राय ।

273.

नमः कृष्णयमारये ।

न दुष्टचित्ताखिलसौम्यभावाद्-
विनेयमार्ग्गं सुखमाश्रयन्ते ।
इति स्फुटं येन यमारिरूपं
कृतं सदा तं प्रणमामि निघ्नः ॥

पराभ्यर्थनया तस्य साधनं क्रियते मया ।
कृपालुर्दुष्करकृते अपि नो वीक्षते बलम् ॥

भूत्वा श्रीमान् यमारिर्जगदिदमखिलं तत्स्वरूपं करिष्ये
इत्येवं योगयुक्तः स्वकहृदि तरणौ बीजमाद्यं च दृष्ट्वा ।
पूजां कृत्वा जिनानां सुवि[1]ततकरुणास्तत्प्रभाभिः समन्तात्
तेषामग्रे निविष्टस्त्रिशरणगमनं सर्व्वभावैर्विदध्यात् ॥

रत्नत्रयं मे शरणं सर्व्वं प्रतिदिशाम्यघम् ।
अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः ॥

शून्यलक्षणविरहादनिमित्तकारणस्य वैगुण्यात् ।
तर्काविषयं[2] यस्मात् प्रणिधानं नास्ति सर्व्वत्र ॥

ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम् ।

धर्म्मोदयशुषिरान्तश्चैत्यं विश्वाब्जवज्रमध्यस्थम् ।
तद्गर्भे हुँकुलिशं ध्यायात् शशिमण्डले योगी ॥

ॐ वज्रात्मकोऽहम् ।

तन्निर्म्मितं[3] वज्रधरं सविद्यं
नीलारुणास्यं सितमध्यभागम् ।
वज्रासिराजीवसुरत्नचिह्नं
वज्रासनस्थं सुविचिन्त्य सम्यक् ॥

---

[1] N ब्वि॰ । [2] A ॰नयं । [3] C ॰न्निमित्तं ।

ह्रोःकारद्वयगर्भितमात्मानं त्र्यक्षरं स्फुटं दृष्ट्वा ।
निर्गतगभस्तिमण्डलपरिपूरितसर्व्वदिग्भागम् ॥
मुखेन तस्य प्रविशेद् विधिज्ञः
[1]ततोऽत्र पद्मे द्रुततां व्रजेच्च ।
तद्रश्मियोगात् पितरौ विलीनौ
दिग्देवतीगीतमिदं ततोऽत्र ॥
त्वं वज्रचित्त भुवनेश्वर सत्त्वधातो
त्रायाहि मां रतिमनोज्ञमहार्थकामैः ।
कामाहि मां जनक[2]सत्त्व महाग्रबन्धो
यदीच्छसे जीवितं [3]मञ्जुनाथ ॥
त्वं वज्रकाय [4]बहुसत्त्वप्रियाङ्क[5]चक्र
बुद्धार्थबोधिपरमार्थहिताऽनुदर्शी
रागेण रागसमयं मम कामयस्व
यदीच्छसे जीवितं [6]मञ्जुनाथ ॥
त्वं वज्रवाच सकलस्य हितानुकम्पी
लोकार्थकार्य्यकरणे सदा संप्रवृत्तः ।
कामाहि मां सुरतचर्य्य समन्तभद्र
यदीच्छसे जीवितं मञ्जुनाथ ॥
त्वं वज्रकाय समयाग्र महाहितार्थ
सम्बोधिवंशतिलक समतानुकम्पी ।
कामाहि मां गुणनिधिं बहुरत्नभूतं
यदीच्छसे जीवितं मञ्जुनाथ ॥[7]

---

1 AC तत् स्तोत्र० ।
2 AC सम्ब० ।
3 AB मञ्ज० ।
4 AC वच्च० ।
5 AC ०प्रियाग्र० ।
6 AC मञ्ज० ।
7 Identical Ślokas also occur in *supra* 162-3.

चोदनामुररीकृत्य स्वमन्त्रार्थशरीरभाक् ।
भावनाद्यहृदा युक्तो मङ्गलकलनात्मनि ॥
तत्र स्वदेवताकारान् बुद्धा तद्रश्मिसञ्चयैः ।
प्रवेश्य विधिवद् भूयात् यमारिरतिभीषणः ॥
कठोरबर्हिकण्ठाभः सव्यशुक्लारुणेतरः ।
क्रोधपर्य्यङ्कयोगेन विश्वाब्जरविसंस्थितः ॥
स्वाभविद्याधरास्वादरसायनमहासुखः ।
कडारोर्द्ध्वज्वलत्केशः पिङ्गभ्रूश्मश्रुलोचनः ॥
फणीन्द्रवृन्दनेपथ्यो मृणालधवलद्विजैः ।
मुद्गरासिधरः सव्ये वामे राजीवरत्नधृक् ॥

ॐ धर्म्मधातुवज्रस्वभावात्मकोऽहम् । [1]क्षिँ जँ खँ गँ तथा क्षँ सँ रँ चक्षुरादिषु भावयेत् । जः हुँ वँ होः तथा खँ रँ बाह्ये रूपादिके न्यसेत् । भूतेषु च यथा लोँ माँ पाँ ताँ इति च । सम्प्रति वुँ आँ जिँ खँ हुँ इत्येभिः पञ्चस्कन्धान् बिशोधयेत् । चित्ते वाचि तथा मूर्ध्नि हुँ आः ॐकारजान् प्रभून् वज्राब्जचक्रमध्यस्थान् ध्यात्वा मन्त्रमिमं वदेत् ॐ सर्व्वतथागतचित्तवज्रस्वभावात्मकोऽहम्, ॐ सर्व्वतथागतवाग्वज्रस्वभावात्मकोऽहम्, ॐ सर्व्वतथागतकायवज्रस्वभावात्मकोऽहम् ।

[2]ततो बुद्धान् गगनोदरस्थान्
सञ्चिन्त्य हृन्मन्त्रसमुत्थिताभिः ।
तन्मुक्तरश्म्युत्थसमस्तदेवी-
कराग्रनिर्म्मुक्तसरोजलेन ॥

---

[1] AC खिँ

[2] AC तथा

संसिक्तसर्व्वावयवः प्रभावान्
कुलाधिपाधिष्ठितपद्मचूडः।
ततोऽनुविद्यावयवेषु योगी
कुलानि पञ्चाप्रततं विदध्यात्॥

मूर्ध्नि तथा स्तनमध्ये नाभौ गुह्ये च चरणपर्य्यन्तं देव्या भवन्ति ॐ हुँ स्वा आ हाख्यानि बीजानि। हुँकारजनितकुलिशं तन्निर्म्मितगुह्यकमलया देव्या अनुरागसुखितयाऽखिलगगनोदरवर्त्तिनो बुद्धान् ॐ सर्व्वतथागतानुरागेण वज्रस्वभावात्मकोऽहं वज्राब्जध्वनिभिर्बुद्धान् पद्मान्तर्विनिवेश्य च तत्प्रभोद्भवरूपाद्यैः स्वाभावतो बुद्धान् प्रपूजयेत् ॐ सर्व्वतथागतपूजावज्रस्वभावात्मकोऽहम्।

वाच्यवाचकनिर्म्मुक्तं सर्व्वं स्थिरचलादिकम्।
दृष्ट्वा बुद्धान् स्तुयादेभिः सद्भूतगुणसम्पदैः॥
अक्षोभ्य वज्रमहाज्ञान वज्रधातु महाबुध[1]।
त्रिमण्डल त्रिवज्राग्र घोषवज्र नमोऽस्तु ते॥
वैरोचन महाशुद्ध वज्रशान्त महारते।
प्रकृतिप्रभास्वराग्राग्र द्वेषवज्र नमोऽस्तु ते॥
रत्नराज सुगाम्भीर्य्य खवज्राकाशनिर्म्मल।
स्वभावशुद्ध निर्लेप कामवज्र नमोऽस्तु ते॥
वज्रामित महाराग निर्व्विकल्प खवज्रधृक्।
रागपारमिताप्राप्त भाषवज्र नमोऽस्तु ते॥
अमोघ वज्रसम्भूत सर्व्वाशापरिपूरक।
शुद्धस्वभावसम्भूत वज्रसत्त्व नमोऽस्तु ते॥

---

[1] AC ०बुद्धः।

अनिलानलचक्रसंस्थं ध्यात्वा पञ्चामृतं कपालान्तः ।
प्रणवोपेतं सार्चिस्त्र्यक्षरजप्तेन तेनैव ॥
प्रीणयेत् स्वं परांश्चैव ततो मन्त्रं स्फुरन् जपेत् ।
प्रपूज्य संहरेत् चान्ते स्वयोगात्म्यं विसर्ज्जयेत् ॥
इति रचनासङ्कलितं शशभृद्वलयं तु यच्छुभं तेन ।
मङ्गलयुक्तो लोको लभतां [1]जैनं परं शश्वत् ॥

॥ श्रीमद्यमारिसाधनम् ।

। कृतिः श्रीमङ्गलसेनस्य ॥

---

## 274.

नमो यमान्तकाय ।

हुँबीजं निष्पाद्य शुद्धिपर्य्यन्ततः सूर्य्यस्थहुँकारनिष्पन्नं यमान्तकं क्रुद्धं ऊर्द्ध्वकेशं कृष्णं षण्मुखं षड्भुजं षट्चरणं महिषारूढं प्रत्यालीढस्थितं नरमुण्डरुण्डैर्विभूषितं अतिभयानकाकारं व्याघ्रचर्म्मनिवसनं दक्षिणे खड्गमुद्गरवज्राणि वामे घण्टावज्रपाशमुषलान् धारयन्तं मुकुटे अक्षोभ्यं विभावयेत् । ततः समयमुद्रां बन्धयेत् । सम्पुटाञ्जलिं बद्ध्वा अङ्गुष्ठौ विकासितौ तर्ज्जन्योर्मध्ययुगलतृतीयपर्व्वाणि भञ्जयेत् । ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् स्वाहा इति मन्त्रं जपेत् ।

॥ कृष्णयमारिसाधनम् ॥

---

[1] AN जिनं ।

## 275.

आदौ ताव[1]न्मन्त्री सुखासनोपविष्टः साधको रक्ता[2]-कारनिष्पन्नं सूर्य्यमण्डलं स्वहृदि विभाव्य तदुपरि नील-हुँकारं विन्यस्य हुँकाररश्मिजयमान्तकादीन् गुरु[3]बुद्ध-बोधिसत्त्वांश्चावलम्ब्य पुष्पादिभिः सम्पूज्य नमस्कृत्य त्रिश-रणगमनादिकं कृत्वा शून्यतां भावयेत् ॐ शून्यता-ज्ञानवज्रस्वभावात्मकोऽहम् । तदनन्तरं रक्ताँकारजसूर्य्य-मण्डलोपरि हुँकारं तत्परिणतं वज्राङ्कितनीलदण्डं हुँका-राधिष्ठितं विभावयेत् हुँकाररश्मिचोदितसर्व्वतथागत-प्रवेशपूर्व्वकम् । एतत् सर्व्वं परिणम्य यमारिं विचिन्तये-दात्मानं प्रत्यालीढपदस्थितं एकमुखं द्विभुजं नीलवर्णं दक्षिणकरे वज्राङ्कितोद्यतनीलदण्डं वामकरे तर्ज्जनीपाशं हृदि, एवम्भूतं यमारिं स्फुरत्संहरद्रूपं विश्वदलकमलो-परि सूर्य्यस्थमहिषारूढं भावयेत् । ततो भगवतो हृदि सूर्य्यमण्डले हुँकारपरिणतं हुँकाराधिष्ठितं नीलदण्डं हुँकारनिर्गतरश्मिना जगदवभास्य पुनस्तत्रैव प्रवेशयेत् । एवं क्रमेण यावदिच्छं स्फुरणसंहरणं कुर्य्यात् समयादि-विधिपूर्व्वकम् । एवं त्रिचतुःसन्ध्यं भावयेत्, ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् स्वाहा इति मन्त्रं जपेत् ।

॥ कृष्णयमारिसाधनं समाप्तम् ॥

---

[1] A omits. [2] N ०ङ्कारं । [3] AC ०बुद्धसत्त्वा० ।

276.

अन्तस्तुषार[1]मपि येन दयावशेन
सन्दर्शितं हठविनेयजनेषु रौद्रम् ।
विश्वोपकारविधिनाटकनर्त्तकाय
तस्मै मम प्रणतिरस्तु यमान्तकाय ॥
आदौ स साधकवरः सुखदासनस्थो
ध्यानालये सुरभिगन्धमनोभि[2]रामे ।
ध्यायात् समाहितमना हृदये स्वकीये
रक्ताक्षतिप्रभवचण्डमरीचिबिम्बम् ॥
तस्योपरि स्थितसरश्मिकनीलवर्ण-
हुँकाररश्मिशत[3]जातयमान्तकादीन् ।
सम्पूज्य मानसविनिर्म्मितपुष्पधूप-
दीपादिभिर्बहुविधैः प्रणिपत्य [4]भक्त्या ॥
कुर्व्वीत पूर्व्वक्षतकल्मषदेशनादीन्
शून्यं जगदखिलमामुखयेत् ततोऽपि ।
ॐ शून्यतादिवरमन्त्रपदेन कुर्य्यात्
आत्मस्वरूपपरिभावनमादरेण ॥
रक्ताक्षतिप्रभवचण्डकरस्थनील-
हुँकाररूपकुलिशाङ्कितनीलदण्डम् ।
[5]दण्डस्थहुँक्षतिधरस्फुरदंशुजालं
सञ्चोदिताखिलजिनानयनप्रवेशम् ॥
दृष्ट्वैतदेव निखिलं परिणम्य पश्चात्
आत्मानमाशु परि[6]भाव्य यमारिरूपम् ।

---

[1] B ०महिषेण । [2] ANC ०रम्ये । [3] B ०जाप० ।
[4] A भजे । [5] B omits six lines here. [6] AC ०भाष० ।

नीलाङ्गमेकवदनं द्विभुजं सरोषं
[1]सव्ये करे कुलिशाङ्कितनीलदण्डम् ॥
वामे करे तु हृदि तर्ज्जनिपाशयुक्तं
धूम्रश्मश्रुजालकपिलीकृतवक्त्रपद्मम्।
व्याघ्राजिनांशुकसमावृतगुह्यदेशं
वक्त्रान्तरालविचलद्रसनाभुजङ्गम् ॥
सद्विश्वपद्मकमलोपरि सूर्य्यपीठ-
संस्थायिचण्डमहिषाक्रमणप्रवीणम्।
लम्बोदरं विकटदंष्ट्रमुखं च खर्व्वं
मार्त्तण्डमण्डलतुलाप्रणयिचिने[2]त्रम् ॥
क्रुद्धाष्टनागरचिताभरणं कपाल-
श्रेणीनिबद्धघनपिङ्गलफेरि[3]चक्रम्।
सद्यो गलन्नरशिरःकृतलम्बिहारं
अट्टाट्टहासरसनिर्ज्जितमारसैन्यम् ॥
पश्चाद् विचिन्त्य भगवद्धृदयस्थितार्क-
संस्थायिहुँकृतिसमन्वितनीलदण्डम्।
तत्रस्थहुँकृतिकरैरवभास्य विश्वं
तत्र प्रवेशमचिरेण पुनर्व्विदध्यात् ॥
इत्थं क्रमात् स्फुरणसंहरणं यथेष्टं
कृत्वा पुनः समयपूर्व्वकमेव सर्व्वम्।
सन्ध्याचतुष्टय[4]मिदं सकलं विभाव्य
खिन्नो यथाविहितमन्त्रजपं प्रकुर्य्यात् ॥

---

[1] A सर्व्वें।
[2] ANC ०द्विने०।
[3] AC ०हरित०, B ०फेरु०।
[4] B ०मियं।

कृत्वा यमारिभगवल्लघुसाधनं मे
मैत्रीश्रियं यदिह जातमगण्यपुण्यम् ।
तेनास्तु विश्वमखिलं भगवद्यमारि-
रूपं भवेयमहमप्यचिराद् यमारिः ॥

तत्रायं मन्त्रराजः, ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् स्वाहा ।

॥ कृष्णयमारिसाधनम् ॥

---

277.

श्रीमन्तमन्तः[1]करुणामयं तं
सत्त्वार्थहेतोर्बहिरुग्ररूपम् ।
नाथं यमारिं प्रणिपत्य मूर्ध्ना
लिखामि तत्साधनमिष्टहेतोः ॥
पूर्व्वं तु [2]मन्त्री परिहृष्टचेताः
सुखासनस्थो[3]ऽथ कृतप्रतिज्ञः ।
हृन्न्यस्तहुँकारभवैर्विचित्रैः
पूजासमूहैरभिपूज्य नाथान् ॥
कृत्वा च तेषां पुरतोऽथ पाप-
प्रकाशनादीन् परिभाव्य शून्यम् ।
समुद्भवं धूमसमप्रभं वै[4]
धनुर्निभं मारुतमण्डलं प्राक् ॥

---

[1] Ab ०तन्त०, B ०मन्त्र० ।
[2] ANC मन्त्रं ।
[3] Ab सत्कृत्० ।
[4] Ab ०प्रभावं

रँकारबीजप्रभवं त्रिकोणं
रक्तं पुनर्म्मण्डलमग्नि[1]संज्ञम्।
वँकारजं वारुणमण्डलं तु
घटोपमं शुक्लमधोमुखं च॥
लँकार[2]जातं सुसमं सुपीतं
माहेन्द्रबिम्बं चतुरस्ररूपम्।
हुँसुँसमुद्भूतमथाष्टशृङ्गं
सुमेरुराजं च यथानु[3]पूर्व्या॥
विचिन्त्य चोपर्य्युपरि क्रमेण
पूर्व्वोक्तवाय्वादिकमण्डलादीन्।
पश्चाच्च हुँकारजवज्रभूमिं
प्राकार[4]सत्पञ्जरमध्य[5]भागे॥
अकारनिष्पन्नमृगाङ्कबिम्ब-
मध्यस्थधीःकारजमञ्जुवज्रम्।
हृद्वाम[6]पुस्ताङ्ककरं कुमारं
वीरं च सव्योद्यतचारुखड्गम्॥
पीतारुणाङ्गं सितपञ्चचीरं
सद्वज्रपर्य्यङ्कमतीव शान्तम्।
ध्यात्वा पुनस्तद्धृदये विधुस्थ-
धीःकारजातारुणभानुबिम्बात्॥
समन्ततो निर्गतरक्तभाभि-
स्त्रैधातुकं व्याप्य सुसं[7]स्थितांस्तान्।

[1] Ab संज्ञिकं। [2] Ab ०जं।
[3] ANAb पूर्व्वं। [4] A सत्यं जन०। [5] B भागैः।
[6] Ab पुस्तक०। [7] B ०स्थितात्मान्।

क्रोधांश्च विद्याजिनबोधिसत्त्वान्
सञ्चोद्य चानीय च भानुबिम्बे ॥
प्रवेश्य तस्मिन् सहसैकलोली-
[1]भूत्वैव जातं पुनरेव सूर्य्ये ।
स्फुरन्मयूखैरति[2]भास्वरं च
रक्तं सु[3]विस्तीर्णतरं च तत्र ॥
हुँकारजं कृष्णकरालवज्रं[4]
हुँकारगर्भं विविधांशुजालम् ।
ततस्तु संस्फार्य्य [5]जिनादिबोधि-
सत्त्वान् पुनस्तैरपि षड्गतिस्थान् ॥
सत्त्वान् प्रतिष्ठाप्य [6]विनीय बोधा-
वानीय सर्व्वान् कुलिशे प्रवेश्य ।
अनन्तरं तत् परिणम्य वज्रं
ध्यायाद् यमारिं द्विभुजैकवक्त्रम् ॥
वामे करे तर्ज्जनिवज्रपाशं
सव्ये करे [7]चोद्यतवज्रदण्डम् ।
उत्तान[8]सम्पातियमं च याम्य-
मारूढमालीढपदं महिष्यम् ॥
खर्व्वं च दंष्ट्राविकृताननं च
महोदरं चापि [9]च लम्बजिह्वम् ।
आपिङ्गश्मश्रूर्द्ध्वगमूर्द्धजातं
बभ्रुभ्रुवं रक्ततराक्षयुग्मम् ॥

---

[1] Ab भूतै॰ । [2] ANCB ॰भासु॰ । [3] A ॰विशीर्ण॰ ।
[4] C ॰वदनं । [5] Ab जिनबो॰ । [6] Ab विनेय॰ ।
[7] Ab चोद्द॰ । [8] Ab ॰सम्पत्ति॰ । [9] AN चलवच्चिकं च ।

कृष्णं सरोषं भृकुटीललाटं
[1]हुङ्कारिनागाष्टकभूषिताङ्गम् ।
व्याघ्राजिनांशुं च कपालशेखरं
कृष्णं वि[2]मुण्डावलिहारधारिणम् ॥
भीमं युगा[न्ता]नलदीप्तिदीप्तं
भयङ्करस्यापि भयं [3]दधानम् ।
उग्रं स्फुरद्दुष्टयमारिवृन्दै-
र्नतं च लोकोत्तरदेवसङ्घैः ॥
अट्टाट्टहासेन सुरासुरादीन्
सन्त्रासयन्तं परितः समस्तान् ।
विद्रावयन्तं च महोग्रमार-
सङ्घानशेषान् भुवनत्रयेऽपि ॥
एवं सदा ध्यानपरः स मन्त्री
मन्त्रं जपन् रात्रिन्दिवं विशङ्कः ।
स्थित्वा श्मशानादिषु तत्त्वयोगात्
सिध्यत्यवश्यं [4]समयी विशुद्धः ॥
संलिख्य [5]यत्साधनमेतदाप्तं
पुण्यं मया तेन यमारिवीरः ।
लोकोऽस्तु सर्व्वो जगदुग्रदुःख-
[6]सम्भारमारक्षयशीघ्रकारी ॥

॥ कृष्णयमारिसाधनं समाप्तम् ॥

---

[1] Ab स्फु०, B हू० ।
[2] N हृल्लम्बिमुण्डा० ।
[3] B ददा० ।
[4] Ab समये विबुद्धः ।
[5] Ab सत्सा० ।
[6] AC ०सम्लान०, Ab ०संसार०

278.

आदौ तावन्मन्त्री करुणावान् सुखासनासीनः पुरतो भगवन्तं यमद्विषं पटादिगतमवलम्ब्य गुरुबुद्धबोधिसत्त्वांश्च दृष्ट्वा नानापूजाभिः सम्पूज्य प्रणम्य च पापदेशनादिकं कुर्य्यात्। तदनन्तरं स्वभावशुद्धेत्यादिमन्त्रेण स्वभावशुद्धिमधिमुच्य सर्व्वधर्म्मनैरात्म्यं विभाव्य निजमन्त्रमुच्चारयेत् ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। ततः स्वहृदये अकारजचन्द्रमण्डले नीलहुँकारं क्वचित् सूर्य्यस्थं हुँकारं दृष्ट्वा तद्रश्मिभिर्विघ्नान् विमर्द्य यमान्तकाकारक्रोधांश्च सत्त्वार्थकरणप्रवणान् संस्फार्य्य झटिति तत्परिणामेन यमान्तकमात्मानं विचिन्तयेत् कृष्णं त्रिमुखं षड्भुजं, क्वचित् षण्मुखं षट्चरणं च, दंष्ट्राकरालवदन[1]मारक्तनयनं [2]चक्रखड्गमूषलधरदक्षिणभुजत्रयं वेत्तालीपरशुपाशधारिवामभुजत्रयं, खड्गमुद्गरवज्रधरदक्षिणकरं वामे घण्टावज्रपाशमूषलानि क्वचित्, ऊर्द्धपिङ्गलकेशमुण्डमालाविभूषितमौलि[न]मष्टनागेन्द्रविरचिताभरणं अक्षोभ्यमुकुटिनं विश्वदलकमलोपरि सूर्य्यमण्डले प्रत्यालीढपदस्थितमारक्तप्रभामण्डलं विभाव्य स्तनान्तरचन्द्रमण्डले हुँकारं पश्येत्। कायवाक्चित्तमण्डलेषु ॐ आः हुँ इत्यक्षरत्रयं सितरक्तकृष्णं यथाक्रमेण पश्येत्। तदनन्तरं स्वहृद्बीजनिर्ग्गत[3]देवीभिरात्मानं [4]सम्पूज्य संस्तुत्य च मन्त्रं पठेत् ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् स्वाहा।

॥ कृष्णयमारिसाधनम् ॥

---

[1] ACBa ०मारक्तवदनमारक्त०।
[2] Ab वज्र०।
[3] ANC देवतीभि०।
[4] Ab संयोज्य।

## 279.[1]

ॐ नमो यमान्तकाय ।

कपाल[2]मालिनं वीरं नागाद्याभरणोत्कटम् ।
नत्वा यमान्तकं नाथं लिख्यते तस्य साधनम् ॥
सुखासने समासीनो हृन्न्यस्तनीलहुँकृतिः ।
तज्जपूजाविशेषैश्च [3]विभुमग्रे [4]प्रपूजयेत् ॥
कृत्वा [5]तस्य पुरोदेशे [6]पापादिदेशनादिकम् ।
निःस्वभावं जगत् सर्व्वं झटित्यालोक्य सर्व्वतः ॥
हृद्वीजोद्भवचिह्नोत्थं प्रत्यालीढाङ्घ्रिपङ्कजम् ।
भृकुटीभङ्गभीमास्यं पिङ्गलश्मश्रुमूर्द्धजम् ॥
त्रिभिर्वक्त्रैर्ललज्जिह्वैर्भीमदंष्ट्राकरा[7]लिनम् ।
रक्ताक्षं च बृहत्कुक्षिं नवनीलघनद्युतिम् ॥
मार्त्तण्डमण्डलस्थं च शिरस्यस्थिविभूषितम् ।
व्याघ्रचर्म्मांशुकं [8]खर्व्वं सर्व्वगर्व्वापहारिणम् ॥
सूर्य्यप्रभामहातेजःपूरिताशेषदिङ्मुखम् ।
ज्वलज्ज्वालावलीतीव्रयुगान्तवह्निसन्निभम् ॥
चक्रासिमूषलं भास्वद्वेत्तालीपर्शुपाशकम्[9] ।
बिभ्राणं षट्सु दिव्येषु सव्याव[10]सव्यपाणिषु ॥
सरोषं भीममत्युग्रं यमारिं मारमर्द्दनम् ।
हुँकारापूर्णकण्ठं च ध्यायाद् भीतिविवर्ज्जितम् ॥

---

1 This Sādhana is twice given in the MSS. A, N and C.

2 Ab मालं चीरं ।

3 Ab सम्पूज्य भक्तितो विभूं ।

4 AC पूजन् जपेत् ।

5 Ab ततः ।

6 ANCB दुरित० ।

7 Ab ०लिभिः ।

8 B खड्गं ।

9 B ०पाशं ।

10 ANCB सव्योग्र० ।

विंशत्यर्द्धसहस्राणां मन्त्राणां मन्त्रवित् सदा ।
जपन्नव्यग्रचित्तस्तु लभते सिद्धिमीहिताम् ॥
पूर्व्वसेवाविधेश्चैष मन्त्रः सिध्यति मन्त्रिणाम् ।
कर्म्मानुरूपतो वर्णं नोक्तम[1] स्यातिविस्तरात् ॥
गुरूपदेशत[2] स्तच्च चिन्त्यं वाञ्छितसिद्धये ।
ज्ञेयं च यत्नतो धीरैः क्रव्यान् पश्चापि सेवयेत् ।
बल्युपहारयोगेन चतुःसन्ध्यं विधीयताम्[3] ॥

इति जापमन्त्रः— ॐ ह्रीः ष्ट्रीः विकृतानन हुँ हुँ फट् फट् स्वाहा ।

॥ यमान्तकसाधनं समाप्तम् ॥

---

## 280.

[4]नमो यमान्तकाय ।

प्रथमं कृतमुखशौचादिको भावकः स्वहृदि अकारज-चन्द्रे कृष्णयँकारं विभाव्य तत्किरणैर्गुरुबुद्धादीनानीय सम्पूज्य पापदेशनादिकं [5]विदध्यात् । ततो यँकार-माचात्मको योगी शून्यतामामुखीकृत्याधिष्ठाय च प्रणिधि-मनुस्मरेत् । तदनु रेफोद्भवसूर्य्ये हुँकारभूतवज्रमुद्गरं च स्वबीजलाञ्छनं विभाव्य तज्जनितं वज्रभूमिं वज्रप्राकारं वज्रपञ्जरं च भावयेत् । तन्मध्ये चन्द्रमण्डलं द्विगुणस्वर-वर्णमयद्वात्रिंशन्महापुरुषलक्षणोद्भूतं प्रज्ञास्वभावं समीक्ष्य

---

[1] Ab ॰स्माभिर्वि॰ ।  [2] Ab ॰स्तत्त्वं ।  [3] ANB विधेयमिति ।
[4] Ab and B give the *Namaskāra*.  [5] Ab ध्यायात् ।

तदुपरि अशीत्यनुव्यञ्जनविशुद्धिद्विगुणित ड ढ द ध [1]य ल युतकादिव्यञ्जनैर्द्विगुणैर्निष्पन्नमपरं शशिमण्डलमुपायरूपं स्फुरदनन्तदीधितिं ध्यायात्। तत[2]स्तदुभयनिष्पन्नहूर्य्यें नीलहुँयँसमुद्भूतं नववारिवाहनीलं महोदरं पिङ्गलतर-भ्रूश्मश्रूर्द्धकेशं दंष्ट्रोत्कटं खर्व्वपीनमहिषस्थं व्याघ्राजिनधरं मृगपतिचर्म्मोत्तरीयं अतिभयप्रदं स्वशरीररश्मिनिर्म्मित-पञ्चक्रोधकृतस्फुरणं आभरणीकृतफणिराजं विगलच्छताद्र-नर[3]शिरःश्रेणीधरं षड्भुजं सव्यभुजैर्मुद्गरकरवाल[4]-कुलिशधरं वामैस्त्रिभिस्तर्ज्जनिकापाशमूषलधरं षण्मुखं प्रथमं [5]चोर्द्धं च नीलं सितपीतरक्तकृष्णं सव्येतरयोर्म्मुखं क्रमशः, सर्व्वाणि मुखानि रक्तवर्त्तुलत्रिनेत्राणि षट्चरणं च पदाभ्यां प्रत्यालीढं [6]द्वाभ्यां विरचितनृत्यं अपराभ्यां कृतसत्त्वपर्य्यङ्कं स्फुरदर्कमध्यसंस्थान् विघ्नानामर्द्दयन्तं अष्ट-करोटीसुघटितभीषणतरमुण्डमालाम्। तदनु [7]क्षिँ जँ खँ लँ स्कँ सँबीजसम्भूताः क्षितिगर्भवज्रपाणिखगर्भलोकेश्वर-विस्कम्भिसमस्तभद्रनामानश्चक्षुषि कर्णे घ्राणे जिह्वायां स्तनयोश्च नाभौ च चक्राशनिरत्नाम्बुजसायकशतकोटिधरं दक्षिणकरैः वामकरेण तर्ज्जनिमुद्राः सितकृष्णपीतरक्त-श्यामशुक्लाश्चन्द्रस्थाः। तदनु शिरसि कण्ठे हृदये काय-वचनचित्तस्थाः चन्द्रमण्डलासीनाः ॐ-आः-हुँसम्भवाः सितरक्तकृष्णवर्णा[8]श्चक्राम्बुजधारिणः सव्यैर्वामकरैस्तर्ज्जनी-

[1] ANCAb य र ल व।
[2] ANCAb ॰स्तदुपरि।
[3] ANC omit ॰नर॰।
[4] Ab ॰ग्गरं।
[5] Ab चोर्द्धनीलं।
[6] NCB ताभ्यां।
[7] B खिँ।
[8] Ab ॰रक्ता॰।

मुद्रा ध्येयाः। ततो हृद्बीजरश्मिभिर्ज्ञानसत्त्वमानीय [1]समरसतां विभाव्याक्षोभ्यमौलिनमात्मानं चिरं भावयेत्। खेदे तु मन्त्रं जपेत्। तत्रायं मन्त्रः— ॐ ह्रीः ष्ट्रीः विकृताननं हुँ हुँ [2]फट् फट् स्वाहा। ततो विसृज्योत्तिष्ठेत्।

॥ इति यमान्तकसाधनम् ॥

---

## 281.

आदौ तावत् सुखासनोपविष्टः साधको रक्ताकारनिष्पन्नं सूर्य्यमण्डलं स्वहृदये विभाव्य तदुपरि नीलहुँकारं विन्यस्य हुँकाररश्मिजविद्यारिं गुरुबुद्धबोधिसत्त्वांश्चावलम्ब्य पुष्पादिभिः सम्पूज्य नमस्कृत्य त्रिशरणगमनादिकं कृत्वा शून्यतां भावयेत्, ॐ शून्यताज्ञानवज्रस्वभावात्मकोऽहम्। तदनन्तरं रक्ताकारज[3]सूर्य्यमण्डलोपरि हुँकारं तत्परिणतं वज्रं हुँकाराधिष्ठितं विभावयेत्। हुँकाररश्मिचोदितसर्व्वतथागतप्रवेशपूर्व्वकमे[4]तत् सर्व्वं परिणम्य विघ्नान्तकं विचिन्तयेत् आत्मानं प्रत्यालीढपदस्थितं एकमुखं द्विभुजं नीलवर्णं वामकरेण तर्ज्जनिका[5]पाशं दक्षिणकरेणोद्यतवज्रं भयानकं पिङ्गलोर्द्ध्वकेशम्। ततो भगवतो हृदि सूर्य्यमण्डले हुँकारपरिणतं हुँकाराधिष्ठितवज्रं

---

[1] C समयसत्त्वं। [2] B हह instead of फट् फट्। [3] A वज्रसू०। [4] A ०कर्म्मे। [5] B ०नीकं०।

एवम्भूतं विघ्नारिं स्फुरत्संहरद्रूपं विश्वदलकमलोपरि सूर्य्यस्थं भावयेत्। समयादिविधिपूर्व्वकं एतद् द्विचिचतुः-सन्ध्यं भावयेत्। ॐ आः विघ्नान्तकृत् हुँ।

॥ विघ्नान्तकसाधनम् ॥

---

282.

नमो यमान्तकाय।

ॐ इन्द्राय ह्रीः, यमाय ष्ट्रीः, वरुणाय वि[1], कुबेराय कृ, ईशानाय त, अग्नये आ, नैर्ऋतये न, वायवे न, चन्द्राय हुँ, अर्काय हुँ, [2]ब्रह्मणे फट्, वसुधारायै फट्, [3]वैमचित्रिणे [4]स्वा, सर्व्वभूतेभ्यो हा[5], ही ही हुँ हुँ हेँ हेँ स्वाहा। बलिमन्त्रः। यत् [6]खाद्यते तत् सर्व्वं यमारये देयम्।

॥ [यमान्तकस्य बलिमन्त्रः] ॥

---

[1] NC विं।
[2] B ब्राह्मणे।
[3] ANC वेम०।
[4] B स्वाहा।
[5] B स्वाहा।
[6] N खाद्यं।

283.

पूर्व्वोक्तविधानेन चन्द्रमण्डलोपरि पीतमैँकारपरिणतं विश्वकमलस्थितं त्रिमुखं त्रिनेत्रं चतुर्भुजं कृष्णशुक्लदक्षिणवाममुखं सुवर्णगौरं सत्त्वपर्य्यङ्किणं व्याख्यानमुद्राधरकरद्वयं अपरदक्षिणवामभुजाभ्यां वरदपुष्पितनागकेशरमञ्जरीधरं नानालङ्कारधरमात्मानं मैत्रेयरूपमालम्ब्य मुद्रां बन्धयेत्। [1]हस्तद्वयेन पृथक् मुष्टिं बद्धा तर्ज्जन्यौ अङ्गुष्ठमध्यो[2]त्थापिते पुष्पाकारेण मीलयेत्। ततो जापमन्त्रः— ॐ मैँ मैत्रेय स्वाहा।

॥ [3]मैत्रेयसाधनम् ॥

---

284.

नमो जम्भलाय।

पूर्व्ववत् शून्यतापर्य्यन्तं विचिन्त्याष्टदलविश्वपद्मोपरि चन्द्रे जँकारजं भगवन्तं जम्भलं ध्यायात् सुवर्णवर्णं लम्बोदरं सर्व्वालङ्कारधरं वामदक्षिणहस्ताभ्यां नकुलीबीजपूरकधरं रत्नसम्भवमुकुटं उत्पलमालाधरम्। पूर्व्वादिदलेषु [4]माणिभद्रपूर्णभद्रधनदवैश्रवणान्, आग्नेयादिदलेषु केलिमालीविचित्रकु[5]ण्डली[6]मुखेन्द्रचरेन्द्रान्, तथा यथोक्त-

---

[1] C स्तन०।  [2] B ०स्थिते।

[3] This Sādhana is given twice in B.

[4] ANC मणि०।  [5] ANC ०चिविकु०।  [6] N ०सुखे०।

क्रमेण तेष्वेव च वसुधारा[1]चिचकालिदत्तासुदत्ताआर्य्या-सुभद्रागुप्ता[2]देवीसरस्वतीत्येता यक्षिण्यश्चिन्तनीयाः । वसुधारा तु जम्भलसहिता सर्व्वा यक्षिण्यो वसुधारावत् यक्षास्तु जम्भलवत् एवं ध्यात्वा जपेन्मन्त्रम् । तत्र यक्षमन्त्राः— ॐ जम्भलजलेन्द्राय स्वाहा । ॐ माणिभद्राय स्वाहा । ॐ पूर्णभद्राय स्वाहा । ॐ धनदाय स्वाहा । ॐ वैश्रवणाय स्वाहा । ॐ केलिमालिने स्वाहा । ॐ विचित्रकुण्डलिने स्वाहा । ॐ मुखेन्द्राय स्वाहा । ॐ चरे[3]न्द्राय स्वाहा । अथ यक्षिणीमन्त्राः— ॐ वसुधा[4]रिण्यै स्वाहा । ॐ चन्द्र[5]काल्यै स्वाहा । ॐ दत्तायै स्वाहा । ॐ सुदत्तायै स्वाहा । ॐ आर्य्यायै स्वाहा । ॐ सुभद्रायै स्वाहा । ॐ गुप्तायै स्वाहा । ॐ देव्यै स्वाहा । ॐ सरस्वत्यै स्वाहा । एवं ध्यायतां जपतां त्रिसन्ध्यं अष्टौ शतानि जलचुलुकानां प्रयच्छतां त्रैलोक्यराज्यं ददाति । प्रातरर्का[6]करुदितेन जलमध्ये जपतां अक्षयधनसमृद्धिर्भवति । अथ सुवर्णादिपत्रे वसुधारां यक्षिणीसहितां द्वितीयपत्रे भगवन्तं जम्भलं यक्षैः परिवृतमालिख्य सम्पुटीकृत्याराधयेत् । अष्टौ महासिद्धीरपि ददाति ।

॥ इति जम्भलसाधनम् ॥

---

[1] B ॰चन्द्रकान्ति॰ ।
[2] AC ॰गुप्ता॰ ।
[3] C चले॰ ।
[4] B ॰रिणी ।
[5] B ॰कान्त्यै ।
[6] NC ॰तर्का॰ ।

285.

शून्यताभावनानन्तरं ईषद्रक्तचन्द्रमण्डले यक्षशकटकमष्टदलपद्माकारं तन्मध्ये वँकारेण वसुधारां पीतवर्णां धान्यमञ्जरीहस्तां वरदां सर्व्वालङ्कारभूषितां अष्टयक्षिणीपरिवृताम्— तद्यथा, भद्रा सुभद्रा सुनन्दा[1] गुप्ता सुगुप्ता सरस्वती आर्य्या चन्द्रकान्ता चेति। एताभिः परिवृता महादेवी तस्या भगमध्ये जँकारजं जम्भलं वसुधाराऽऽलिङ्गितं सम्पुटबोधिचित्तविनिर्जातं रत्नसमुन्नतहस्तं प्रव्यक्तं भावयेत्। क्षरणकाले भगवतः पूर्व्वस्यां दिशि नीलवर्णं [2]माणिभद्रं दक्षिणस्यां दिशि पीतवर्णं पूर्णभद्रं पश्चिमायां रक्तं वैश्रवणं उत्तरस्यां रक्तं धनदं अग्निनैर्ऋतिवायव्यैशानकोणेषु नीलं पूर्णं सुपूर्णं पीतं केलिमालिनं रक्तवर्णं मुखेन्द्रं श्यामवर्णं चरेन्द्रम्— [3]सुवर्णवर्णं पञ्चकिरीटिनं दक्षिणहस्ते बीजपूरकं वामहस्ते रत्नप्रवर्षिनकुलीधरं स्फुरत्पञ्चतथागतं शङ्खमुण्डपद्ममुण्डे महानिधाने रत्नादिप्रवर्षमाणे स्वगृहं पाददेशे चिन्तयेत् पीतवर्णं श्रीजम्भलनाथं नीलोत्पलमालाधारिणम्। सर्व्वं चैते अष्टयक्षिणीभगमध्यस्थिता रत्नप्रवर्षमाणा जम्भलसदृशा भावनीयाः। पूर्व्वद्वारे धनदमहाधनदौ दक्षिणद्वारे यक्षमहायक्षौ पश्चिमद्वारे केलिमहाकेलिनौ उत्तरद्वारे पूर्ण[4]सुपूर्णौ। एतौ नग्नौ लम्बवृषणौ लम्बोदरौ रत्नप्रवर्षकौ। तता मूर्ध्नि माणिभद्रं चक्षुद्वये वैश्रवणं वक्त्रे

---

[1] B नन्दासुनन्दा०।
[2] ANC मणि०।
[3] BN सुवर्णं।
[4] C ०महापूर्णौ।

मुखेन्द्रं स्तनान्तरे पूर्णभद्रं नाभौ धनदं ऊरुभ्यां केलिमालिनौ विचित्रकुण्डलिनौ पादद्वये इति देवतान्यासः। अक्षरन्यासस्तु ॐ मूर्ध्नि जलुँ[1] ललाटे ह्लुँ कर्णयोः ह्रा मस्तकपृष्ठे ॐ मणि[2]बन्धे जलुँ हस्तमध्ये ह्लुँ[3] सर्व्वाङ्गुल्यग्रे सः सर्व्वाङ्गुलीमूले। ॐ जम्भलजलेन्द्राय स्वाहा। ॐ जलुँ[4] ह्लुँ स्वाहेत्युदकमन्त्रः। तथा तर्ज्जन्यां माणिभद्रो मध्यमायां पूर्णभद्रो अनामिकायां धनदः कनिष्ठायां वैश्रवणः हस्तपार्श्वे मुखेन्द्रः [5]विचित्रकुण्डलिनी अङ्गुष्ठे मणिबन्धे केलिमालिनी। एतदक्षरन्यासं हस्ते कृत्वा प्रातर्व्वज्रोदकादिपञ्चामृतं तदभावे वज्रोदकमप्युदकमिश्रचुलुकेन पीत्वा हस्तेनादायाष्टोत्तरशतचुलुका देयास्त्रिसन्ध्यम्, अचिरादेव सिध्यति। ॐ जलुँ ह्लुँ सः इत्युच्चार्य्य उदकचुलुकानि देयानि। एवं कृते यदि न सिध्यति तदा श्रीवज्रहुँकाररूपमात्मानं ध्यात्वा जम्भलप्रतिमां विषराजिकालवणधुस्तूरपचरसश्मशानाङ्गारैर्लेपयित्वा आतपे शोषयेत्। पश्चात् श्मशानाग्नौ तापयेत् क्रुद्धो नियतं सिध्यति।

॥ इति [6]विस्तरजम्भलसाधनम् ॥

---

[1] ANC ऊँ। [2] ANC ०पद्मे ऊँ। [3] ANC चलुँ। [4] AN ह्रुँ, C जुँ। [5] NCB चिविकु०। [6] B जम्भल०।

## 286.

शून्यताभावनानन्तरं हृद्ये पीतजँभवं जम्भलं त्रिमुखं षड्भुजं अक्षोभ्यजटामुकुटिनं दक्षिणत्रिभुजैः मातुलुङ्गाङ्कुशबाणधरं प्रथमवाम[1]भुजैकेन वामपार्श्वस्थितप्रज्ञालिङ्गितमपरवामभुजाभ्यां सपाशनकुलीकार्म्मुकधरमात्मानं निष्पाद्याग्रतस्तद्रूपं ध्यानेनारोप्य तच्छिरसि महावज्रधरं ध्यात्वा तद्द्रव्येणाभिषेचयन् वज्रोदकमष्टोत्तरशतचुलुकं पातयेदिति। ॐ जम्भलजलेन्द्राय स्वाहेति मन्त्रः।

॥ आम्नायान्तरेण जम्भलसाधनम् ॥

---

## 287.

पूर्व्वोक्त[2]विधानेन हृदीन्दुमध्ये बीजं [3]द्वितीयस्य तृतीयं पीतवर्णं शून्यदेवेनाक्रान्तं अर्द्धेन्दुशिरसिभूषितं तेनैव बीजनिष्पन्नं श्रीजम्भलं पीतवर्णं द्विभुजं दक्षिणहस्ते बीजपूरकं वामहस्तेन रत्नप्रवर्षमाणनकुलीधरं पञ्चबुद्धकिरीटिनं पदद्वयेन शङ्खमुण्डपद्ममुण्डौ महानिधानावाक्रान्तौ नीलोत्पलमालाधरं सर्व्वालङ्कारभूषितं जम्भलरूपेणात्मानं भावयेत्। स्वगृहेऽपि प्रविशन्तं नानारत्नादिप्रवर्षमाणं आत्मानं चिन्तयेत्। ततो मुद्रां बन्धयेत्। हस्तद्वयेन मुष्टिं बद्धा मध्यमामध्यमतृतीयपर्व्वभग्ना इति

---

[1] ANC ०भुजकेन।
[2] Ab ०धानमेव किन्तु।
[3] ANCAb तृतीयस्य।

जम्भलमुद्रा। ॐ जम्भलजलेन्द्राय स्वाहा— अनेन मन्त्रेण भट्टारकायाष्टोत्तरशतमुदकचुलुकं देयम्। पश्चात् पूजां कृत्वा मन्त्रं जपेत्। ततः सिद्धिर्महाधनदपतिर्भवतीति न संशयः।

॥ संक्षिप्तं श्रीजम्भलसाधनं समाप्तम् ॥

---

288.

पूर्व्वोक्तविधानेन हृदि विश्वपद्मचन्द्रे पीतजँकार[1]-निःसृतरश्मिभिर्बुद्धादीन् सम्पूज्य पापदेशनादेरुत्तरकालं शून्यतामामुखीकृत्य तस्मिन्नेवावस्थाने विश्वपद्मचन्द्रे जँभवं बीजपूरकं बीजगर्भं तद्रश्मिभिरनेकविधसत्त्वार्थं कृत्वा तत्परिणामेन जम्भलं हेमवर्णं पञ्चबुद्धरत्नमुकुटिनं दिव्यवस्त्राभरणं द्विभुजैकमुखं बीजपूरकधारिदक्षिणकरं नानारत्नोद्गारिमुखनकुलीवामकरं नीलोत्पलमालाधरं उभयपार्श्वावस्थितरत्नमञ्जरीवर्षयक्षद्वयं चरणाधःस्थापित-रत्नमञ्जरीघटमनेकरश्मिमालाकुलमात्मानं प्रविचिन्त्य ॐ जम्भलजलेन्द्राय स्वाहा इति मन्त्रं जपेदिति। हस्तद्वयेन मुष्टिं कृत्वा मध्यतृतीयपर्व्वभङ्गेन मुद्रया हृत्कण्ठमूर्धोर्णायां दद्यात्। प्रातरप्येवं झटिति ध्यात्वा अष्टोत्तरशतजलाञ्जलिमनेन दद्यात्, ॐ जम्भलजलेन्द्र [2]धनं मे देहि स्वाहा।

॥ संक्षिप्तजम्भलसाधनम् ॥

---

[1] ANC ०निष्पन्नं तं। [2] AC धनन्देहि।

289.

नमोऽशेषसम्पत्तिदश्रीजम्भलाय ।

प्रथमं तावन्मन्त्री सर्व्वपदार्थान् स्वदेहं च शून्यं विभाव्य तदनन्तरमीषद्रक्तचन्द्रमण्डलं प्रज्ञोपायमयं तदेव यक्षशकटं अष्टदलपद्माकारं तन्मध्ये वँकारेण वसुधारां पीतवर्णां धान्यमञ्जरीहस्तां वरदां सर्व्वालङ्कारभूषितां अष्टयक्षिणीपरिवृताम्—तद्यथा, भद्रा सुभद्रा गुप्ता सुगुप्ता देवी सरस्वती आर्य्या चन्द्रकान्ता च—एताभिः परिवृता महादेवी तस्या भगमध्ये जँकारेणात्मानं पञ्चबुद्धकिरीटिनं दक्षिणहस्ते बीजपूरकं वामे नकुलीधरं पञ्चतथागतानपि रत्नादिप्रवर्षमाणान् पादद्वयेन शङ्खमुण्डपद्ममुण्डौ महानिधानौ रत्नादिप्रवर्षमाणौ स्वगृहदेशे विचिन्तयेत्। पीतवर्णं नीलोत्पलमालाधरं श्रीजम्भलनाथं वसुधारालिङ्गितं बोधिचित्तविसर्गनिर्यातं रत्नसमूहव्याप्ताशेषाकाशं विभावयेत् । [1]क्षरणकाले पूर्व्वस्यां दिशि नीलवर्णं पूर्णभद्रं, दक्षिणस्यां दिशि पीतवर्णं [2]वैश्रवणं, पश्चिमस्यां दिशि रक्तवर्णं धनदं, उत्तरस्यां दिशि पीतवर्णं माणिभद्रं, आग्नेय्यां दिशि रक्तवर्णं विचित्रकुण्डलिं, नैर्ऋत्यां नीलवर्णं केलिमालिनं, वायव्यां पीतचरेन्द्रं, ऐशान्यां पीतमुखेन्द्रं, सर्व्वे चैते अष्टयक्षिणीभगमध्ये स्थिता रत्नप्रवर्षमाणाः जम्भलसदृशा भावनीयाः । पूर्व्वद्वारे धनदमहाधनदौ नग्नौ

---

[1] Ab क्षर० ।   [2] AC धनदं ।

लम्बदृषणौ रत्न[1]वर्षकौ दक्षिणद्वारे पद्ममहा[2]पद्मौ पश्चिमद्वारे केलिमहाकेलिनौ[3] उत्तरद्वारे पूर्णसुपूर्णौ, एतेऽपि लम्बदृषणाः। जम्भलनाथस्यानुलोमेन मन्त्राक्षरादिन्यासं कुर्य्यात्। ॐ शिखायां जं मुखे भल भुजद्वये ज हृदये लें नाभौ द्राय ऊरुद्वये स्वाहा जानुद्वये चेति। मूर्ध्नि माणिभद्रस्तु चक्षुर्द्वये वैश्र[4]वणः तथा मुखेन्द्रो मुखसंस्थितः पूर्णभद्रः स्तनान्तरे नाभौ धनदो यक्षः ऊरुद्वये केलिमाली पादद्वये विचित्रकुण्डलिः सर्व्वाङ्गेषु चरेन्द्रकः जम्भलनाथः स्वात्मा, एवं ध्येयः। अधुनाक्षरन्यासः— ॐ मूर्ध्नि [5]ज्लुँ ललाटे [6]ब्लुँ कर्णद्वये सः मस्तकपृष्ठे विन्यसेत्। हस्तन्यासोऽधुना कथ्यते। देवताभिरक्षरैस्तु ॐ मणिबन्धे [7]ज्लुँ हस्तमध्ये ब्लुँ[8] सर्व्वाङ्गुल्यग्रे सः सर्व्वाङ्गुलीमूले। ॐ जम्भलजलेन्द्राय स्वाहेति प्रतिष्ठा कर्त्तव्या। तर्जन्यां माणिभद्रः पूर्णभद्रस्तु मध्यमायां अनामिकायां [9]धनदः कनिष्ठायां वैश्रवणस्तथा मुखेन्द्रो हस्तपार्श्वे मणिबन्धे केलिमाली अङ्गुष्ठे विचित्रकुण्डलिः तर्ज्जन्यङ्गुष्ठयोस्तु चरेन्द्रकः हस्तमध्ये जम्भलजलेन्द्रकः। वज्रोदकादिपञ्चामृतं तदभावे वज्रोदकमपि उदकमिश्रचुलुकेन पीत्वाऽष्टोत्तरशतचुलुकानि देयानि त्रिसन्ध्यम्। अचिरादेवासौ जम्भलसदृशो भवति,

---

[1] C ०वर्षणौ।  [2] ANCAb ०पद्मकौ।

[3] AC केलिमालिनौ।

[4] B and Ab sometimes write ०मनः for ०वणः।

[5] AC ऊ।  [6] B च्लुँ।

[7] AC क्रुँ।  [8] B हूँ, NC च्लुँ; A omits.

[9] AC नन्दः।

धनकनकसमृद्धः पृथिवीं द्रव्यपूर्णां करोति। ॐ जलुँ ब्लुँ सः इत्युच्चार्य चुलुकादि देयानि। असिद्धे सति श्रीवज्र-हुँकारमात्मानं ध्यात्वा जम्भलप्रतिमां विषराजिका-निम्बपत्रं धुस्तूरकश्मशानाङ्गारैः प्रलिख्य ध्यायात्। तथातपे शोषयेत्, पश्चात् श्मशानाग्नौ तापयेत्। क्रुद्धोऽपि नियतं सिद्धो भवति।

॥ श्रीजम्भलसाधनं समाप्तम् ॥

---

290.

अनामिकाग्रे पीतजँकारं ध्यात्वा मृदादिकुण्डे च जम्भलं ध्यात्वा अनामिकामूले पानीयधारामन्यहस्तेन पातयन् स्तनमस्तक एव पतन्तीं जँकारमष्टोत्तरशतं जपं विचिन्तयेत्।

। धाराजम्भलोपदेशः ।

दक्षिणकरे चन्द्रस्थवुँ आदिपञ्चबीजपरिणतपञ्चतथा-गतान् ध्यात्वा तांश्चन्द्रेण सह द्रवीकृत्वा अग्रतो जँभवं जम्भलं प्रसिद्धं निष्पाद्य पूर्व्वोक्तद्रवेण तच्छिरसि उदकेन सहाष्टोत्तरशतं विरलतर्ज्जन्यङ्गुष्ठमुष्टिहस्तेन चुलुकं पातयेदशेषसम्पत्तिर्भवतीति।

। जम्भलस्योपदेशः ।

जिनो वैरोचनो ख्यातो रत्नसम्भव एव च।
अमिताभोऽमोघसिद्धिरक्षोभ्यश्च प्रकीर्त्तितः॥

वर्णा अमीषां सितः पीतो रक्तो हरितमेचकौ ।
बोध्यङ्गी वरदो ध्यानं मुद्रा अभयभूस्पृशौ ॥
तथागतानां बीजं वुँ आँ जिँ खँ हुँ ।
इन्दौ दक्षिणपाणिस्थे पञ्चाक्षरसमुद्भवान् ।
ध्यात्वा तथागतान् पञ्चद्रवरूपान् विभावयेत् ॥
जम्भलं जँकृतोद्भूतं ध्यात्वा चुलुकमादरात् ।
तन्मन्त्रं जप्त्वा पयसां दद्यादष्टोत्तरं शतम् ॥

॥ [जम्भलस्य चुलुकदानविधिः] ॥

---

291.

ॐ अः इति आवाह्य स्वहृदि [1]अकारपरिणत-चन्द्रमण्डलमध्ये हुँकारेण नवारवज्रं तन्मध्ये इन्द्रगोप-समानहुँ[2]कारात् पूर्व्वोक्ताकारमन्त्रेण जम्भलनाथं स्वहृदि प्रविशन्तं उच्छुष्म[3]डिम्भरूपं अविद्धकर्णं कृष्णवर्णं पिङ्गोर्द्ध-केशं वामनाकारं कृतभृकुटिनं दंष्ट्रा[4]वन्तं रत्नसम्भव-मुकुटिनं अष्टनागाभरणभूषितं [5]वामकरेण रत्नादिक-मुद्गिरन्तीनकुलीधरं दक्षिणेन रक्तपूर्णकपालधरं दक्षिण-शिरःकनकवर्णनानालङ्कारभूषितं पतितधनदं पद्भ्या-मवष्टभ्य रत्नच्छटादिकमुद्गिरयन्तं स्फुरद्रश्मिमाला-कुलमात्मानं विचिन्त्य उच्छुष्मकं दक्षिणकरे ॐकारज-शकटकं वँकारजभद्रघट[6]मिव ढालयन्तं हस्तमध्ये जंकारं

---

[1] N खं०, AC खा० ।
[2] AN जँ० ।
[3] A ०जम्भलस्वरूपं ।
[4] B ०वर्णं ।
[5] A वामनाका० ।
[6] C ०मिवालपन्तं ।

तर्ज्जन्यां भकारं मध्यमायां लकारं अनामिकायां जकारं कनिष्ठायां लेंकारं [1]ज्येष्ठायां द्राकारं मणिबन्धे यकारं ततः ॐ स्वाहाकार इति मन्त्रन्यास-भावनाक्रमः। मुखमभिमन्त्र्य जलं दद्यात्। ॐ ज्लुँ ब्लुँ स्वाहा, उदकचुलुकदानमन्त्रः। ॐ ऐन्द्राणि मुखभ्रमरि स्वाहा। हस्तान्मुखं मुखाद् हस्तं तन्मुखे दापयेत्। एवं [2]क्रियया सर्व्वसत्त्वदारिद्र्यदुःखच्छेदार्थं जम्भलं भावयेत्। जम्भल एव भवतीति।

॥ उच्छुष्मजम्भलसाधनम् ॥

---

292.

दारिद्र्यदुःखाहतमानसानां
का चित्तवृत्तिः सुगतस्य कृत्तेः।
अतश्च कोपादिव जम्भलोऽसौ
उच्छुष्मरूपं भयदं चकार ॥

नत्वा तं जम्भलं नाथं सर्व्वाशापूरकं लघु।
डिम्भरूपं महावीरं वक्ष्ये तत्साधनं स्फुटम् ॥

ॐ अः आवाह्य पश्चात् स्वहृदि च पुनर्जातपूर्णेन्दुमध्ये
ध्यायाद् वज्रं नवारं स्फुरदमलकरं कृष्णहुँकारजातम्।
जँकारादिन्द्रनीलात् कुलिशवरटके रश्मिजालं खपूरं
सर्व्वैरुच्छुष्मरूपं द्विभुजमथ मुखैकं भावयेत् क्रोधमूर्त्तिम्॥
मेघाभं डिम्भदेहं कृतभृकुटिमुखं क्रुद्धवृत्तान्तनेत्रं
स्थूलाङ्गं कृष्णवर्णं वसनविरहितं घोरदंष्ट्राकरालम्।

---

[1] A कृष्णा०। [2] AC कृपया।

ढोल्लाविद्धश्रुतिं वै कुपितफणिधरै[1]रष्टभिर्भूषिताङ्गं
खर्व्वं पिङ्गोर्द्ध्वकेशं स्फुरदनलरुचिं वज्रमालाप्रभं च ॥
घोरापीततनुं गदाकरमधो वक्त्रं च रक्तोद्गमं
[2]आक्रम्याङ्घ्रियुगेन भूतलगतं रोषात् कुबेरं स्थितम्।
रक्तापूर्णकपालपानमलसं सम्मोदरोमाञ्चितं
रत्नोद्गारमुखीं निपीड्य नकुलीं वामेन हस्तेन [वै] ॥
नैःस्वं दुःखतमो हरन्तमखिलं रत्नत्विषा देहिनां
विष्णुब्रह्महरेन्द्रदैत्यमुनिभिः [3]पूज्यं च लोकाधिपैः।
लक्ष्मीचामरलालितं सुरवधूयक्षाङ्ग[4]नाभ्यर्च्चितं
बीजन्यासपरं धनदराजं वा(?)दानाय दत्तं शुभम् ॥

ॐ जलुँ स्वाहेति मन्त्रेण मुखे क्षिप्तोदकचुलुकं तदाकृष्य मुखात् तोयं हस्ते कृत्वा सुखं पठेत्—ॐ ऐन्द्राणि मुखभ्रमरि स्वाहा। पुनरनेनैव मन्त्रेण अष्टोत्तरशतचुलुकम्—

जम्भलाय च षण्मासान् श्राद्धो दद्याद् जपे[5]दपि।
दत्त्वा तोयं तमानीतं सम्पूज्यैवं विसर्ज्जयेत् ॥

एवं षण्मासयोगादविरतमनसा भावयेद् भक्तचित्तः
प्रातश्च काकघोषे सुविमलसलिलं शीतलं यः प्रयच्छेत्।
स स्यादुच्छुष्मतुल्यो हरति स तु दृशा सर्व्वदारिद्र्यदुःखं
निर्विघ्नो वित्तनाथः प्रभुरिव जगतां बुद्धकृत्यैक[6]दक्षः ॥

॥ उच्छुष्मजम्भल[7]साधनं समाप्तम् ॥

---

[1] ANC ॰वरै॰। [2] AC आकम्प्या॰। [3] A पुष्पश्च।
[4] AC नान्यचित्तं। [5] AC ॰दिति।
[6] AC ॰ग्रक्तः। [7] AN ॰लनाथ॰।

## 293.

वन्दे विशुद्धगुणराशिमचिन्त्यमूर्त्तिं
तं जम्भलं चरणनम्रसुरासुरेन्द्रम्।
निर्वापयन्ति मणिकाञ्चनवस्त्रवर्षै-
र्दारिद्र्यदावदहनं स्मृतयोऽपि यस्य ॥
शौचं विधाय शुचिवस्त्रसुगन्धिगात्रो
मन्त्री सुखासनगतः परिभाव्य मैत्रीम्।
कारुण्यमोदसदुपेक्षणशून्यतादि
सर्व्वं विधानसहितं परिशुद्धबुद्धिः ॥
ॐ अः इति प्रथमतः सितरक्तवर्णं
आवाह्य चाक्षरयुगं स्वहृदीन्दुमध्ये।
सच्छ्यामहुँकृतिभवे च नवारवज्रे
विस्पष्टहुँकृतिगृहं गगनाङ्गनस्थम् ॥
हुँबीजकात् स[1]रसकुङ्कुमसन्निकाशात्
पूर्व्वोदितेन पटुम[2]न्त्रवरेण नाथम्।
उच्छुष्मकं विकचनीलसरोजकान्तिं
पिङ्गोर्द्ध्वकेशमणिकाञ्चनचित्रमौलिम् ॥
सद्वासनाकृतिमविद्धसुकर्णपाशं
बालं [3]विसारिनवचन्द्रकला[4]सुदंष्ट्रम्।
रत्नेशशेखर[5]कमष्टफणीन्द्रभूषं
मूर्द्धान्तरत्नकुलीभृतवामपाणिम् ॥

---

[1] C ०रसं।
[2] AC यन्म०।
[3] AC विशालि०।
[4] AC सुदृष्टं।
[5] AC ०मकृष्ट०।

संपूर्णलोहितकरोटिगतान्यपाणिं
आक्रम्य पादतलकेन [1]निषणरूपम् ।
स्वर्णा[2]द्रिकान्तिमणिकाञ्चनचित्रवेशं
रत्नच्छटावमथुचर्व्वितभीमवक्त्रम् ॥
सव्याभिपातिधनदं प्रविशन्तमीक्ष्य
योगी भवेद् झटिति जम्भलरूपमेव ।
बाढं स्फुरद्दहलरश्मिवितानशोभः
शान्ताशयस्तदनु दक्षिणपाणिपद्मे ॥
हुँका[3]रबीजं प्रथमं[4] विभाव्य
वँकारजं भद्रघटान्तमध्यम् ।
मध्ये करस्यास्य जकारबीजं
म्भकारकं तर्ज्जनिकानिषणम् ॥
मध्याङ्गुलीपीठगतं लकारं
अनामिकान्यस्त नकारबीजम् ।
कनीयसी चाङ्गुलिकाश्रितं तु
लँकारकं द्राक्कतिमन्यसंश्रिताम् ॥
हस्तस्य मूले परिभाव्य यं च
स्वाहाक्कतिं निश्चलचित्तवृत्तिः ।
यथोपदेशं सलिलं मुखेऽस्य
दद्यान्निरातङ्कमतिक्रमेण ॥
एवं क्रमेण नियतं समुपास्यमानः
सम्मानबुद्धिधनपुत्रकलत्र[5]राज्यम् ।

---

[1] AC निष्प० । [2] AC ०द्रिका० ।
[3] AN ०रैबीँ० । [4] AC ०जप्रकटं । [5] AC ०बाह्यं ।

श्रीजम्भलः सकलवाञ्छितमत्र दत्ते
लोकान्तरे सकलदुःखमपाकरोति ॥
इदं[1] विधायापि यदत्र पुण्यं
मयास्तु तेनाशु जनः समग्रः ।
चिन्तामणिर्भद्रघटस्य पात्रं
अहं च सर्व्वार्त्तिहरो [2]भवेयम् ॥

[3]ॐ ऐन्द्राणि मुखभ्रमरि स्वाहा, चुलुकमन्त्रः । ॐ जलुँ स्वाहा, जलमन्त्रः । ॐ जम्भलजलेन्द्राय स्वाहा ।

॥ पण्डितस्थविरकुमाराकरगुप्तविरचितमुच्छुष्म-
जम्भलसाधनं समाप्तम् ॥

---

294.

नमो जम्भलाय ।

पूर्व्ववत् शून्यतापर्य्यन्तं विभाव्य ॐ अः[4] इति आवाहन-मन्त्रं पठित्वा अकारजं रजनीनायकमण्डलं विचिन्तयेत् । तदुपरि कृष्णहुँकारजं नवारवज्रं तन्मध्ये इन्द्रगोपनिभं जँकारं तेन आकारं विचिन्त्य तत्सकलपरिणामेन भगवन्तं जम्भलं भावयेत् उच्छुष्मं डिम्भरूपं अविद्धकर्णं ढोल्लकर्णं ऊर्द्ध्वपिङ्गलकेशं [5]खर्व्वं नीलं महोदरं कृत-भृकुटिकं दंष्ट्राकरालवदनं मौलिस्थितरत्नसम्भवं अनन्त-तक्षककर्कोटकमहापद्मकुलिकशङ्खपालवासुकिपद्मइत्यष्ट-

---

[1] AN एवं । [2] N भवस्यां ।
[3] These *Mantras* are given only in N.
[4] AC आः, N अं । [5] ANC खर्व्वपीन० ।

नागैः कृतभूषणं द्विभुजं वामेन नाना[1]रत्नादिद्रव्य-मुद्गिरन्तीं नकुलीं दक्षिणेन रक्तपूर्णकपालं पानाभि-नयेन धारयन्तं रक्तवृत्तनेत्रं चन्द्रस्थित[2]वज्रविष्टरं दक्षिणेन चरणेनाक्रान्ताधोमुखपतितगौरनानालङ्कार-रत्नमुकुटिधनदं स्फुरद्वज्ररश्मिमालाकुलम् । इत्यनन्तरं स्वदक्षिणपाणौ ॐकारं शकटरूपेण हस्तमध्ये वँकारं भद्रघटमिव ढालयन्तं जंकारं तर्ज्जन्यां भकारं मध्यमायां लकारमनामिकायां जकारं कनिष्ठायां लेंकारं ज्येष्ठायां [3]द्राकारं मणिबन्धे यकारं च तत्रैव स्वाहाकारं च तत्समीपे—इति भावनाक्रमः ।

एतां च भावनां कृत्वा साक्षात् श्रीजम्भलो भवेत् ।
तथा सति च सत्त्वानां दारिद्र्यद्रावणक्षमः ॥

तत्रायं पानीयदानक्रमः । ॐ ज्लुँ स्वाहा इत्यनेन मन्त्रेणोदकचुलुकं मुखे प्रक्षिप्याकृष्य[4] च हस्ते कृत्वा ॐ ऐन्द्राणि मुखभ्रमरि स्वाहा अनेन मन्त्रेणाधः-स्थिताय जम्भलाय तदुदकं दद्यात् । अष्टोत्तरशतचुलु-केष्वप्ययं क्रमः । तत्रायं पानीयदानानुशंसः—

षण्मासात् सिद्धिराख्याता कर्त्तव्यो नात्र संशयः ।
किमस्त्यसाध्यं [5]मन्त्राणां योजितानां यथाविधि ॥

॥ इत्युच्छुष्मजम्भलभावनापानीयपरिणामनाक्रमः समाप्तः ॥

---

[1] B रत्नमु० ।   [2] B ०चक्र० ।   [3] C ॐ ।
[4] ANC प्रक्षिप्य only.   [5] B मन्त्रिणां ।

295.

नमः श्रीउच्छुष्मजम्भलाय ।

वितरतु स मुनिकुमारो मुनीन्द्र[1]शून्यभृतिसम्पदः परमाः ।
त्र्यम्बकसखस्य चूडा[2]भूषणमणियुतचुम्बि[3]चरणो यः ॥

निरुत्तरगुणाद्वैतरत्नपत्तननायकः ।
स्वसम्पदि जगत् तूर्णं निनीषुरिति सेव्यताम् ॥

तत्र प्रथमं तावत् मया श्रीजम्भलमाराध्य भूम्यधिगमक्रमेण तदात्मीयजगदभ्युदयादिनिःश्रेयसं [4]सम्प्रति प्रतिष्ठापनीयमित्याशयवान् शुषिरे निरनुस्वारं अकारं शुभ्रं स्फुरद्रश्मिकं तज्जं चन्द्रमण्डलं तत्र हुँकारं मध्ये नीलं बहिः परित ईषत्पीतं [5]स्फुरत्पीतरश्मिसमूहमूर्द्धशिरस्कं तज्ज[6]वज्रं अधः चतुर्भिः सूचिकैरूर्द्ध्वं पञ्चाभियोगान्नवसूचिकं नवाङ्गप्रवचनविशुद्ध्या अन्ये तूर्द्ध्वा[7]धश्चैकीकृतमध्यसूचिकयोगान्नवसूचिकं हुँकारवद् वर्ण[8]क्रियं [9]मुष्ट्यन्तर्गतचन्द्र[10]स्थताद्दशहुँयुक्तं भावयेत्। ततो हुँकारवज्राभ्यां रश्मयः स्फुरित्वा ॐ अः इति मन्त्रोच्चारणपूर्व्वकं दशसु दिक्षु सत्त्वार्थं कुर्व्वन्तीं जम्भलमूर्त्तिमन्यदीपानयनन्यायेन आनीय पुरत एकान्तमूर्त्तिं विभाव्य रश्मिभिः पञ्चोपचारपूजां पापदेशनां च यावदुपेक्षां तदनन्तरं हुँवज्ररश्मिषु समस्तशरीरमन्तर्भाव्य सर्व्वप्रपञ्चरहितत्वेन

---

[1] A °यद्भूरि° C, °युतभूरि° ।
[2] AC °रूपेण ।
[3] ACNb °चुम्बित° ।
[4] A सम्पदि, Ab परि° ।
[5] A स्फीत° ।
[6] C तर्ज्जनी° ।
[7] AC °धर्म्मवप्रैकीकृत्य ।
[8] Nb °प्रियं ।
[9] Nb मुखा° ।
[10] ACNb °मण्डलस्थ° ।

शून्यतास्वभावेषु चन्द्रवज्रबीजरश्मिषु ॐ अः इत्यनेन स्फुरितेनाकृष्य भगवन्तं प्रवेशयेत् । प्रवेशानन्तरं झटिति चन्द्रादिनिष्पन्नमात्मानं भगवन्तं उच्छुष्मं पञ्चवर्षकुमाराकृतिं खर्व्वं विश्वपद्मस्थं चन्द्रोपरि [1]सर्पाभरणभूषितं रत्नमुकुटिं [2]मुञ्चद्रत्नमुखपीताङ्गसुप्तधनदस्य ललाटं दक्षिणेन [3]चरणेन चरणद्वयं वामेनाक्रान्तमूर्त्तिं प्रत्यालीढपदं नग्नं [4]ऊर्द्ध्वलिङ्गं लम्बोदरं हृदि दक्षिणपाणिस्थरक्तपूर्णकपालाभिमुखदृष्टिं वामजङ्घासक्तवामकरेण रत्नच्छटोद्गार्य्यधोमुखनकुलीं दधानमविद्धढोल्लकर्णद्वयमर्द्धेन्दुदंष्ट्राकरालवदनं रक्तवर्त्तुलचिनेचं कृतभृकुटीललाटं[5] पिङ्गोर्द्ध्वकेशं भूस्पर्शमुद्रनीलाक्षोभ्यमुनिमुद्रितमस्तकं तमालनीलानन्तबद्धकेशं रक्ततक्षककृतकर्णवेष्टनं मृणालधवलमहापद्मकृतहारं दूर्व्वाश्यामकर्कोटककृतयज्ञोपवीतं शुक्लवासुकिकृतमेखलं कुन्दसुन्दरपद्मकृतनूपुरं पीतशङ्खपालकृतकङ्कणं धूमाभकर्बुरकुलिककृतकेयूरं नीलवर्णं बहिः परित ईषत्पीतं स्फुरद्रश्मिसमूहं ध्यात्वा ललाटमुखदक्षिणवामबाहुहृद्वज्रोपरि दक्षिणवामजङ्घां दक्षिणवामचरणानामन्तः शुषिरस्थेषु नवसु चन्द्रमण्डलेषु ॐ जम्भलजलेन्द्राय स्वाहा इत्यक्षराणि पीतानि पीतरश्मिकानि पश्येत् ।

तदनु नासावायोर्निर्गमनसमये ॐकारादिरश्मिभिर्हृदये हुँवज्ररश्मिभिश्चतुर्दिक्षु स्फुरित्वा स्पर्शमात्रेण

---

[1] AC सर्व्वा०

[2] ACNb स्फुरद्र० ।

[3] Omitted in AC.

[4] AC ऊर्द्ध्वोपलिङ्गदं ।

[5] C ०टपट्टं, A ०टपदं ।

भगवद्रूपाणां सर्व्वसत्त्वानां चित्तचैतन्यवायोः प्रवेशसमये हुँकारं[1] प्रवेशचित्तस्थिरी[2]करणेनामन्त्रयेत्। नानारत्नानि च सर्व्वलोकधातुस्थानि नानानकुलीधनदमुखेषु प्रवेशयेत्। पुनर्वायुनिर्गमे नागादीन् गिलितरत्नानि पुरतो वमतो ध्यायादेवं भूयो भूयः स्फुरणसंहरणादिकं च। तदनु खेदे सति नमो रत्नत्रयाय नमो माणिभद्राय महायक्षसेनापतये ॐ जम्भलजलेन्द्राय स्वाहेति मन्त्रं दशाक्षरन्यासमन्त्रं वा जपेत्। जलदानकाले तु उत्तान-दक्षिणहस्तस्य मध्ये वँकाररश्मिभिर्हस्तं भद्रघटमिव कुर्व्वन्तं हस्तमूले ॐकाररश्मिभिः [4]कङ्कणाकारैर्युक्तं वँ मध्ये जं तर्ज्जनीमध्यमानामिकाकनिष्ठाज्येष्ठाग्रेषु [5]भलजलेन्द्रा[6] अक्षराणि यथाक्रमं ॐ वँकारयोर्म्मध्ये यकारस्य वाम-दक्षिणपार्श्वयोः स्वाहा अक्षरम्। एतानि[7] स्वस्वस्थान-शुषिरेषु चन्द्रस्थानि पीतानि पीतरश्मिकानि ध्यायात्। सजलपुष्पगर्भहस्तं मुखसमीपे कृत्वा ॐ ऐन्द्राणि मुखभ्रमरि स्वाहेति मन्त्रेण सप्तवारानभिमन्त्रयेत्। तदनु प्रसारितेन हस्तेन दीयमानं जलं मुखेन प्रवेशितजँकाररश्मिभिः हृदिस्थवज्रहुँकाररश्मिभिश्च कृतपीतवर्णं कुलिशमुखान्निः-सृत्य करगतं झटिति पुरतो भावितस्याभिमुखस्यास्य भगवतः प्रतिमाया वक्त्रकुहरे ॐ ज्लुँ स्वाहेति मन्त्रेणाष्टोत्तरशतं नमो रत्नत्रयायेत्यादिना च सप्तवारान् दद्यात्। नमो रत्न-

---

[1] AC ०रेण।
[2] Ab ०करेण।
[3] A ०यच्चाय।
[4] Nb कङ्कणा०।
[5] Nb जम्भल०।
[6] Nb ०न्द्राय।
[7] A reads ॐकारादीनि after this.

चयायेत्यादिना[1] चैकवारोच्चारितेन गुडमिश्रभ्रष्टतण्डुलादिभिर्बलिं भगवते दद्यात्। तदेवं यथाशक्ति त्रिसन्ध्यमेकसन्ध्यं वाऽनुष्ठाय स्तुतिं प्रणिधानं च कुर्य्यात्। तदनुभावितं भगवन्तं ॐ वज्रमुरिति विसर्ज्जयेत्। किञ्च कार्त्तिकी फाल्गुनीवैशाख्याषाढ्यां वाऽन्यतमस्य पूर्णमास्यां अन्यस्मिन् वा शुभे दिवसे [2]शिलाशकलं गृहीत्वा झटिति भगवद्रूपं निष्पाद्य [3]सम्पूज्य च गृहीतपोषधेन शिलैकेनैव[4] चौरक्रमेण प्रतिमां कारयेत्। कृतं चात्मानमिह यथाक्रमं भगवन्मूर्त्तिं साक्षरन्यासं विभाव्य जलदानादिनाऽऽराधयेदित्युपदेशः। तदा तु न[5] विसर्ज्जयेत् भगवन्तं प्रतिमूर्त्त्या हि नित्यमवस्थितं सत्कुर्य्यात्।

॥ पण्डिताभयाकरगुप्तरचितमुच्छुष्मजम्भलसाधनं समाप्तम् ॥

---

296.

श्रीमान् विधूताखिलकल्पजालः
कारुण्यमैत्रीपरिभावितात्मा।
धनप्रदानेन सततं जलेशः
[6][पायाद् भवन्तं भवभीतिभीतम्] ॥

---

[1] AC ०नैवैक०।
[2] Nb सिरसकं, Ab सिलसकं।
[3] AC सम्पाद्य।
[4] AC शिल्पिनैकेन च दिनेन।
[5] ACNb तदन्ते।
[6] The MSS give a most corrupt rendering of this line in the words—पायात् भगवन्तं भगवतीतिभीतं।

प्रथमं तावन्मन्त्री त्रिशरणगमनादिकं कृत्वा ॐ स्वभावशुद्धाः सर्व्वधर्म्माः स्वभावशुद्धोऽहमित्युच्चारयेत्। पुनः सकलं त्रैधातुकं मायोपमं चिन्तयेत्। पश्चात् पँकार-परिणतविश्वपद्मे अकारपरिणतं चन्द्रमण्डलं तस्योपरि जँकारं ज्वलत्कनकनिभं आभाभिः स्फुरन्तं दिक्षु बहुविध-धननिवहं तेनात्मानं जम्भलरूपपरिणतं भास्वत्काञ्चन-वर्णं खर्व्वं सर्व्वालङ्कारभूषितं रत्नमुकुटिनं वामेतर[1]कराभ्यां नकुलीबीजपूरकं वहन्तं इत्यात्मानं जम्भलं कृत्वा पुन-र्दक्षिणपाणिस्थितबीजपूरकं तस्योपरि जँकारं विभाव्य तदुपरि धारान् निपातयेत् नदीप्रभृतिषु वा जलं दद्यात् परस्मै तदाकाराय जम्भलाय। ॐ जँ स्वाहेति मन्त्रः।

एवंप्रकारैः सलिलप्रदानैः
सन्तुष्टचित्तो द्रविणाधिराजः।
ददेद् धनान्यक्षयवृत्तिभाञ्जि
तस्माद् यशो यत्नपरेण साध्यम्॥

॥ श्रीजम्भलसाधनं समाप्तम्।
। कृतिः सुजनभद्रस्य॥

---

[1] AC ०मनेत्र०।

297.

झटिति शून्यतापूर्व्वकं रक्तहुँकारपरिणतारुणवज्र-सम्भवनीलरक्तवामेतराननं [1]मूलमुखसर्व्वशरीरशुक्लं रक्त-वज्रखड्गधरं दक्षिणेन नवांशमरकतपद्मधरं वामे मूलद्विभुजालिङ्गितस्वाभप्रज्ञं विश्वदलपद्मस्थचन्द्रासन-चन्द्रप्रभं वज्रपर्य्यङ्किणं अक्षोभ्याक्रान्तं भास्वन्माणिक्य-मुकुटं प्रतिबिम्बवन्निःस्वभावं स्फुरदमितमुनीन्द्रवृन्दै-रमितजगदर्थङ्कारिक्तपापरवशं महासुखरूपं आसंसार-स्थापितं सर्व्वतथागतजलकं वज्रसत्त्वस्वरूपात्मानं विभाव्य तद्धृदयेन्दुस्थितहुँकारान्निःसृतकिरणाकृष्टतथा-गतवृन्दं स्वबीजे प्रवेश्य तदेव गुह्यमणिद्वारनिर्गतेन्दुद्रव-रूपं प्रज्ञाम्भोजस्थिरं तत्परिणतपीतजँ[2]जातबीजपूर-परिणामं भगवन्तं आर्य्यजम्भलं सव्ये बीजपूरखड्गधरं वामे नकुलीरत्नधरं भुजद्वयालिङ्गितस्वाभप्रज्ञं वज्रसत्त्वमुकुटिनं तुन्दिलं खर्व्ववामनाकृतिं [3]गुह्यकुलिशमणिरन्ध्रदत्त[4]मूला-ननं भावयन् हृद्बीजकिरणाकृष्टतथागतसमूहं बीजकुलिश-निर्गतेन्दुद्रवधारया जम्भलं तर्पयेत्। जलदाने भगवन्त-मवलम्ब्य पञ्चामृतद्रवेणैव वुँ आँ जिँ खँ हुँ इत्यनेना-धिष्ठितेन शङ्खाभेन उदकचुलुकानां शतेन मन्त्रं पठन् आप्याययेत्। तत्रायं मन्त्रः— ॐ आः जँ धनं मे देहि हुँ।

॥ जम्भलसाधनम् ॥

---

[1] AC उन्मुख०। [2] C ०जँकार०।
[3] N सुष्क०। [4] AC ०घरेन्द्रदन्त०।

298.

चन्द्रबिम्बोदरे [1]ध्यातः सर्व्वाद्यस्वरसम्भवे ।
ललाटपट्टमध्ये तु तप्तहेमसमप्रभः ॥
भूरिभूतिपदैश्चैव द्विष्टानां च प्रणाशकः ।
वशकृत् सर्व्वमन्त्राणां सौभाग्यारोग्यवर्द्धनः ॥
ज्लुँ[2]कारो हि महाव्यापी सर्व्वकामफलप्रदः ।
पाणिवज्रे तथा ध्यात्वा तोयं दद्यात् स्वकामतः ॥
सोऽपि स्याज् जम्भलो नूनं सर्व्वसत्त्वहिते रतः ।

॥ वश्यजम्भलविधिः ॥

---

299.

करभावितशीतांशुमण्डलासन[3]संस्थितम् ।
वुँ-आदिपञ्चबीजोत्थशाश्वतादिद्रवैः सह ॥
संमिश्रमुदकं देयं तर्ज्जनी[4]मपसारयन् ।
जँभवं पुरतो ध्यात्वा जम्भलं तस्य मूर्द्धनि ॥

॥ इति जम्भलजलदानोपदेशः ॥

---

[1] AC ध्यायात् ।
[2] AC क्रुँ० ।
[3] N ०सम्मुखं ।
[4] AC ०नीं च प्र० ।

300.

[1]नमः श्रीवज्रमहाकालाय।

अथ भगवान् वज्रमहाकालसाधनं स्वकायवाक्चित्तेभ्यो निश्चारयामास।

हुँकारतत्त्वनिष्पन्नं द्विभुजमेकवक्त्रिणम्।
कृष्णवर्णं महाज्वालं कर्त्रिकपालधारिणम्॥
मुण्डमालाकृतहारं दंष्ट्रा[भीम]भयानकम्।
खर्व्वरूपं महातेजं स्रवन्तं रुधिरं मुखात्॥
आचार्य्ये यः सदा द्वेषी [2]कुपितो रत्नत्रयेऽपि यः।
अनेकसत्त्वविध्वंसी महा[3]कालेन खाद्यते॥
छेदयेत् [4]अङ्गमांसानि पिबेद् रुधिरधारया।
[5]शिरसि विनिविष्टोऽसौ तिलमात्रं तु कर्त्तयेत्॥
मांसजम्बुडिका[6]मद्यपुष्पधूपविलेपनम्।
पञ्चमांसामृतेनैव महाकालाय सृजेद् बलिम्॥

मन्त्रः। ॐ महाकालाय शास[7]नोपकारिणे सद्योमुक्तिश्मशानवासिमातृगणनमस्कृताय एषोऽपश्चिमकालोऽयं यदि त्वं प्रतिज्ञां स्मरसि तदा इमं रत्नत्रयापकारिणं अमुकनामदुष्टं ख ख खाहि खाहि मार मार गृह्ण गृह्ण बन्ध बन्ध हन हन दह दह पच पच दिनैकेन मारय मारय हुँहुँहुँ फट् सर्व्वयक्षराक्षसभूतप्रेतपिशाचोन्मादबलिं

[1] Repeated in MSS A, C and NB.
[2] Nb त्वपि०।
[3] C ०कल्पेन।
[4] ACNb वस्य।
[5] MSS अथवा शिर०।
[6] AC ०सद्यं, Nb ०मध्यं।
[7] AC ०नापहारिरेषो०।

गृह्ण गृह्ण मम सिद्धिं कुरु शान्तिं कुरु रक्षां कुरु। बलिः। अनेन मन्त्रेण कुशपुत्तलिकां कृत्वा विषराजिकाचित्रपट्टक-प्रतिकृतिं कृत्वा गात्रं कण्टकेन पूरयेत्, खदिराग्नौ तापयेत्, ज्वरेण गृह्यते, मोक्षो भवति तत्क्षणात्। अथवा विषराजिकाचित्रकरसेन कपालखण्डेन धर्म्मो-दयं अष्टभिः ॐकारैः परिवेष्टयेत्, मध्ये साध्यस्य नाम विदर्भयेत्, तच्चाग्नौ तापयेत्, ज्वरेण गृह्यते। दुग्धेन प्रक्षालयेदिति मोक्षो भवति।

अथ भावनाविधिरुच्यते—त्रिकोणमण्डलं कृत्वा पञ्चोपहारैः सम्पूज्य कृष्णवेशधारी सम्भूय तिलकं दत्त्वा पूर्व्वोक्तभावनया स्वयमेवाचार्य्यः श्रीमहाकालो भूत्वा पश्चात् स्वरश्मिभिः काली कराली वराली कङ्काली महाकाली पञ्चयोगिनीभिः महाविक्रीडितरूपिणीभिः कर्त्रिकपालधारिणीभिर्वायुवेगेन गत्वा मांसं कर्त्तयन्तं रुधिरं पिबन्तं अन्त्रं छेदयन्तं नाभिमुत्पाटयन्तं तिलप्रमाणं कुर्वन्तं[1] क्रोधाज्ज्वलन्तं इति।

॥ महाकालसाधनम् ॥

---

[1] MSS ०करणं।

301.

पूर्व्वोक्तविधानेन शून्यताभावनानन्तरं विश्वपद्मसूर्य्ये कृष्णवर्णहुँकारं तत्परिनिष्पन्नं श्रीमहाकालभट्टारकं द्विभुजमेकमुखं कृष्णवर्णं त्रिनयनं महाज्वालं कर्त्तिकपाल-धारिदक्षिणवामभुजं मुण्डमालालङ्कृतोर्द्धपिङ्गल[1]केशोपरि [2]पञ्चकपालधरं दंष्ट्राभीमभयानकं भुजङ्गाभरणयज्ञोप-वीतं [3]खर्व्वरूपं स्रवद्रुधिरमुखमात्मानं झटिति निष्पाद्य मन्त्रमावर्त्तयेत्। तत्रायं मन्त्रः, ॐ महाकाल हुँ हुँ फट् स्वाहा। विषरुधिररसेन श्वेतसर्षपैर्महाकालस्य धूपं दत्त्वा बलिं सृजेत्।

मांसजम्बुडिका[4]मद्यपुष्पधूपविलेपनम्।
पञ्चमांसामृतेनैव महाकालाय सृजेद् बलिम्॥

अनेन मन्त्रेण—तद्यथा, ॐ महाकालाय शासनोप-कारिणे। एषोऽपश्चिमकालोऽयं रत्नत्रयापकारिणं यदि प्रतिज्ञां स्मरसि तदा इमं दुष्टं ख ख खाहि खाहि मार मार गृह्ण गृह्ण बन्ध बन्ध हन हन दह दह पच पच दिनैकेन मारय हुँ हुँ फट् फट्। तत्रायमुपचारः—त्रिकटुकेन साध्यप्रतिकृतिं कृत्वा गात्रं कण्टकेनापूर्य्य विषराजिकया विधिवदालिप्य वह्नौ तापयेत्, यस्य नाम्ना स तत्क्षणा-देवादृश्यो नष्टो भवति। अथ—

---

[1] AC ०केशाङ्गहारं।
[2] AC omit.
[3] AC सर्व्वाङ्गख०।
[4] ACNb ०मर्घं०।

आचार्य्ये यः सदा द्वेषी कुपितो रत्नत्रयेऽपि[1] यः।
अनेकसत्त्वविध्वंसी महाकालेन खाद्यते ॥
छिनत्ति[2] अङ्ग[3]मांसानि पिबेच्च[4] रुधि[5]रं तथा।
शिरसि विनिविश्यैव तिलमात्रं तु कर्त्तयेत् ॥
इत्यादि विस्तरेण मन्तव्यमिति।

॥ श्रीमहाकालसाधनं समाप्तम्[6] ॥

---

## 302.

नमो महाकालाय।

निम्बकाष्ठमयं महाकालं कृत्वा कर्त्रिकपालाहृतौ करौ ऊर्द्ध्वकेशं कपालमकुटं सर्पाभरणभूषितं गात्रं रक्तास्यं दंष्ट्राकरालवदनं व्याघ्रचर्म्मावरणकटिं मुण्डमालावेष्टितं नरशिरोद्यममालिनं प्रेतासनस्थं उत्थितं ध्यात्वा घोरान्धकारकर्त्रिः कृष्णाष्टम्यां साधनमारभेत। दक्षिणमूर्त्तिरसौ स्थापयितव्यः। प्राङ्मुखो भूत्वा मन्त्रं जपेत्। दशसहस्रं समयद्रव्येण बलिं दत्त्वा गुग्गुलुधूपं दद्यात्। नानापुष्पप्रकरं च कृत्वा, ॐ मणिमण्डितत्रिशूलहस्त एह्येहि महाकाल सर्व्वशत्रुनिर्य्यातये ज्वरेण गृह्लापय गृह्लापय

---

[1] ACNb त्वापितरत्नत्रयोऽपि।
[2] AC छिन्दन्ति।
[3] MSS तस्याङ्ग॰।
[4] MSS ॰च्चापि।
[5] AC ॰राणि च तथा।
[6] This *Sādhana* is repeated after this in A and C.

हुँ फट्। निराहारं जपेत्। ज्वरं कृत्वा स्वमुखं मन्त्रं जपेत्। पूर्व्ववद् बलिर्द्देयः। ॐ महाकाल हन हन वज्रेण स्वाहा। लक्षमेकं जपेत्। ॐ महाकाल हन हन वज्रेण मम कार्य्यं कुरु स्वाहा। द्विलक्षं जपेत्। ॐ महाकाल हन हन वज्रेण एतत् प्रेषयामि करिष्यथ स्वाहेति तृतीयलक्षं जपेत्। ॐ महाकाल हाहा हह रक्ष रक्ष बलिं गृह्ण कार्य्यं कुरु जः। वज्रयोगिनी-महोत्तरसाधनं कृत्वा महाकालं साधयेत्।

॥ महाकालसाधनम् ॥

---

303.

नीलाम्भोजतमालकज्जलघनच्छायो नवीनार्क्कवन्-
निःसीमप्रसरप्रतीच्यकिरणज्वालारुणो लोचनः।
दंष्ट्राकोटिकरालभास्वरलसद्वक्त्रान्तराले भ्रमन्
भीष्मश्रीरसनस्तनूत्तममहाकालो जगत्पिङ्गलः॥
सन्मैत्रीकरुणां तथैव मुदितां ध्यायादुपेक्षां ततः
कुर्य्यात् कल्मषदेशनादिमखिलं श्रीमद्गुरोराज्ञया।
सर्व्वाकारवतीमनन्तसुगतप्रज्ञामया शून्यता
सञ्चिन्त्य स्फुटनीलहुँकृतिमतः सम्भोगवच्चिन्तयेत्॥
तद्बीजं भगवन्तमुग्रकिरणज्वालावलीढा[1]म्बरं
सम्भूर्त्तोच्छलदन्धकारपटलच्छायं महाभीषणम्।

---

[1] AC ०वलित०।

खर्व्वं खर्व्वरपीवरं प्रविकटकुण्डोरुदंष्ट्राङ्कुरं
प्रस्यन्दन् घनास्रपिञ्जरबृहत्सृक्कोपकण्ठस्थलम् ॥
विस्फूर्ज्जद् घनरोचिरं वरमणिव्यासक्तपादद्वयं
धातारं परिधानमंशुविलसत् शार्दूलदेहच्छदम् ।
[1]अन्तर्भ्रान्तनिपीतपिण्डितघनध्वान्तौघमुखारुण-
प्रष्ठोद्भ्रामरमण्डलाभविपुलज्वालं च नेत्रत्रयम् ॥
बिभ्राणं परिवेष्ट्य वामभुजयोर्दण्डं त्रिशूलं तथा
हस्ते सास्रकपालमेकमपरं चैकां महाकर्त्तरीम् ।
ध्यायादूर्द्ध्वनिवेशनं नरशिरः[2]स्रक्सक्तपीनोरसं
विद्युत्पुञ्जकरालकुन्तलचयश्मश्रूत्कटस्य श्रियम् ॥
आचार्यान् इह ये द्विषन्ति कुधियो रत्नत्रयद्रोहिणो
ये वा सर्व्वजनेष्वकाण्डवि[3]सरंस्तीव्रापकारग्रहाः ।
तानुच्चैः कवलीकरिष्यति महादंष्ट्राकुठारस्खलन्
मुण्डास्थिप्रकरोरुपञ्जरकडत्कारैर्गभीरस्वनः ॥
छिन्दन्तं पिशितं पिबन्तमभितः साध्यस्य रक्तानि च
स्थित्वा मूर्ध्नि तिलप्रमाणशकलैर्भिन्दानमङ्गानि वा ।
ध्यात्वा जम्बुडमांसपञ्चपिशितैर्म्मद्यं सपञ्चामृतम् ।
पुष्पैर्धूपविलेपनैरपि महाकालाय दद्याद् बलिम् ॥

तत्रायं मन्त्रः । ॐ महाकालाय शासनोपकाराय [4]सद्यमुक्तिश्मशानवासिमातृगणनमस्कृताय । एषो-ऽपश्चिमकालो यदि त्वं प्रतिज्ञां स्मरसि तदा इमं रत्न-त्रयापकारिणं अमुकनामदुष्टं ख ख खाहि खाहि मार

---

[1] AC omit two lines from here.

[2] A ब्रह्मक्त॰ । [3] AC ॰सरन्तिं त्रायका॰ ।

[4] ANC ब्बाद्य॰ ।

मार गृह्ण गृह्ण बन्ध बन्ध हन हन दह दह पच पच दिनैकेन मारय हुँ हुँ हुँ फट् फट् सर्व्वयक्ष-राक्षसभूतप्रेतपिशाचोन्मादबलिं गृह्ण मम सिद्धिं कुरु शान्तिं कुरु रक्षां कुरु। बलिः।

कृत्वै[1]कं कुशपुत्तलकं तदमुना मन्त्रेण संयोजितं
संपिष्टैर्विषराजिकात्रिकटुभि[2]र्लिप्तं बहिस्त्वत् पुनः।
प्रत्यङ्गार्पितकण्टकं च खदिरज्वालानले तापयेत्
साध्यस्य प्रबलज्वरेण झटिति ज्ञानान्तरायं भवेत्॥

युक्तं राजिकया[3] विषेण च तथा कुर्य्याद् रसं [4]चैतकं
तेनाष्टाकृतिमध्यवर्त्तिसहजस्थानं कपाले लिखेत्।
मध्यारोपितसाध्यनामकमिदं पूर्व्वानले [5]तापयेत्
जापेनास्य महाज्वरोऽथ पयसा प्रक्षालिते मोक्षणम्॥

कृत्वा मण्डलकं त्रिकोणकमथो पञ्चोपचारार्च्चितं
ध्यायन् कृष्णपरिच्छदः सतिलकः [6]स्वीयां महाकालताम्।
कङ्काली च करालिका भगवती काली महाकालिका
ख्याता या च वरालिका स्वकिरणैराकर्षयेत् पञ्च ताः॥

ताभिः कर्त्रिकपालिभिः सरतिभिः क्रीडावतीभिः समं
गत्वा साध्यजनस्य मारुतजवँ ध्यायात् त्रिसन्ध्यं पुनः।
अन्त्रच्छेदमथाग्रपा[7]नमभितो नाभिपुटोत्पाटनं
मांसानां च तिलप्रमाणकरणं क्रोधात् ज्वलन् मन्त्रवित्॥

---

[1] AC न्त्वै॰।
[2] C ॰र्लिपटं।
[3] AN ॰दिविशेष॰।
[4] ANNb चैत्रकं।
[5] C भाव॰।
[6] ANNb स्त्रीमां॰।
[7] A ॰मथाम्नया॰, N ॰मथाग्रया॰, C ॰मपात्रया॰।

कृत्वा कुण्ड[1]मथ त्रिकोणमपरं तस्मिन्नसौ कण्टका-
नष्टौ मुक्तशिरोरुहव्यतिकरः प्रत्यङ्मु[2]खः क्रोधनः ।
[3]तत्कर्म्मप्रसरानुरूपमनले मन्त्री जुहोतु ध्रुवं
चेतोवाञ्छितसिद्धिरस्य[4] भविता बुद्धैर्यथा भाषितम् ॥
लीलावज्रगुरोः प्रणम्य चरणं धृत्वा तदाज्ञामयीं
मालां मूर्द्धनि साधनं जिनपुरोपालस्य कृत्वा जितम् ।
तत्पुण्यं करुणाचलेन कविना तेनास्तु विश्वन्तरा-
मुत्खेलत्करुणामहारससरित्कल्लोल[5]मग्नं जगत् ॥
ॐ महाकालाय हुँ फट् ।

॥ वज्रमहाकालसाधनं समाप्तमिति ।
। कृतिरियं कवेः करुणाभिधानस्य ॥

---

## 304.

नमः श्रीमहाकालाय ।

गङ्गात्मजसमारूढं प्रत्यालीढपदस्थितम् ।
खर्व्वं लम्बोदरं पीनं भिन्नाञ्जनसमप्रभम् ॥
ज्वलत्पिङ्गोर्द्ध्वकेशं च क्रुद्धनागाष्टभूषितम् ।
दंष्ट्रोत्कटलल्जिह्वां कपालावलिमस्तकम् ॥
सार्द्रनरशिरोमालापञ्चमुद्राविभूषितम् ।
व्याघ्रचर्म्माम्बरं भीमं त्रिनेत्रं विकृताननम् ॥

---

[1] AN ०लीमथ, C ०लमथ ।
[2] AN प्रखन्मु० ।
[3] AN तेन क० ।
[4] N ०पर० ।
[5] AC ०कर्णाल० ।

एकवक्त्रं करालास्यं षड्भुजं क्रोधविग्रहम्।
हुँकारनादसम्भूतं श्मशानाष्टकमध्यगम्॥
वज्राङ्ककर्त्रिसव्येष्वक्षस्रक्डमरुकं तथा।
वामे कपालशूलं च वज्रपाशं तथैव च॥
शून्यप्रभामहातिग्मं भयस्यापि भयङ्करम्।
ज्वालामालामहाक्रोधं सर्व्वदुष्टनिसूदनम्॥
भूतप्रेतपिशाचैश्च ग्रहादि[1] जिनपालकैः।
यक्षराक्षसकुम्भाण्डैः सेवितं प्रणमाम्यहम्॥
रत्नत्रयापकारिणां शत्रूणां दुष्टचेतसाम्।
तेषां मारविनाशार्थं साधयेद् विधिना बुधः॥

॥ इति षड्भुजमहाकालसाधनम्[2]॥

---

## 305.

श्रीमहाकालाय नमः।

नीलवर्णं शवारूढं प्रत्यालीढं चतुर्भुजम्।
कर्त्रिकपालखड्गं च खट्वाङ्गधृतभास्वरम्[3]॥
[4]सेनाभञ्जनतन्त्रेषु संग्रामायुधक्षोभणे।
साधयेत् सविधानेन महाकालं महामतिः॥

॥ इति चतुर्भुजमहाकालसाधनम्॥

---

[1] C °दिगपा°।
[2] C adds कृतिरियं after the Colophon but no author it mentions.
[3] C °भीस्व°।
[4] Nb सना°।

306.

नमः श्रीमहाकालाय ।

विश्वाब्जसूर्य्यमध्यस्थं प्रत्यालीढं भुजद्वयम् ।
कृष्णवर्णं महारौद्रं नागाभरणमण्डितम् ॥
कर्त्रिकपालशूलं च मुण्डमाला[1] प्रलम्बितम् ।
महातेजं स्रवद्रुधिरं ललज्जिह्वं भयानकम् ॥

॥ इति महाकालसाधनम् ।
। कृतिः सुमतिभद्रस्येति ॥

---

307.

ॐ नमः श्रीगणपतये ।

ॐ आः गः शान्तिं कुरुष्व माँ ह्रीँ भ्रूँ हुँ स्वाहा, हृदयः । ॐ राग सिद्धि सिद्धि सर्व्वार्थं मे प्रसादय प्रसादय हुँ ज ज स्वाहा, उपहृदयः । ॐ आः गः हुँ स्वाहा, ॐ वरदकराय स्वाहा, ॐ वक्रैकदंष्ट्रे विघ्नेश हुँ फट् स्वाहा, ॐ गणपत्यै स्वाहा, ॐ शान्तिङ्करि भ्रुँ हारिणेशडाकिनि हुँ फट स्वाहा, ॐ जः मेसि हुँ कुरु वँ ॐ अन्ये होः ज ज स्वाहा ।

ततो गणपतिभावना—भगवन्तं गणपतिं रक्तवर्णं जटा-मकुटकिरीटिनं सर्व्वाभरणभूषितं द्वादशभुजं लम्बोदरैक-

---

[1] AC चालङ्कृतं ।

वदनं अर्द्धपर्य्यङ्कताण्डवं त्रिनेत्रमप्येकदन्तं सव्यभुजेषु कुठारशरअङ्कुशवज्रखड्गशूलं च वामभुजेषु मूषलचाप-खट्वाङ्गअसृक्कपालशुष्कमांसकपालफट्कं च रक्तपद्मे मूषिकोपरिस्थितमिति।

॥ गणपतिसाधनं समाप्तम् ॥

---

## 308.

ॐ नमस्तारायै।

विश्वाब्जकर्णिकामध्ये चन्द्रमण्डलमध्यगा।
द्विभुजैकमुखी गौरी ललितासनसंस्थिता॥
नीलोत्पलाङ्कहस्ताभ्यां धारिता जिन[1]मण्डिता।
वस्त्रालङ्कारसंयुक्ता [2]कनकाभरणभूषिणी॥
भावयेत् तारिणी माता विश्वमाता कृपावती।
विजयजयदा लक्ष्मीर्भुक्तिमुक्तिप्रदायिनी॥
सव्ये पीतारुणा त्र्यक्षी चतुर्हस्तैकआनना।
अभयाक्षमालिका सव्ये जिन[3]पात्राशोकभृत्॥
नीला चैकानना वामे [4]तुर्य्यबाहुः सभीषणा।
कर्त्रिकपाल[5]खड्गैश्च उत्पलयष्टिभूषिता॥

॥ इति सद्धर्म्मावतारिणीराजश्रीतारासाधनम् ॥

---

1 ANb ०मुद्रि०।
2 AC कङ्कालभू०।
3 AC ०मात्रा०।
4 C तुल्यबाऊ।
5 Nb ०खट्वाङ्गश्च।

309.

शुभम्।

देवी त्वमेव गिरिजा कुशला त्वमेव
पद्मावती त्वमसि तारिणी देव[1]माता।
व्याप्तं त्वया त्रिभुवने जगतैकरूपा
तुभ्यं नमोऽस्तु मनसा वपुषा गिरा नः॥
यानत्रयेषु दशपारमितेति गीता
विस्तीर्णयानिकजना कल[2]शून्यतेति।
प्रज्ञाप्रसङ्गचटुलामृतपूर्णधात्री
तुभ्यं नमोऽस्तु मनसा वपुषा गिरा नः॥
आनन्दनन्दविरसा सहजस्वभावा
चक्रत्रयादपरिवर्त्तितविश्वमाता
विद्युत्प्रभा हृदयवर्ज्जितज्ञानगम्या
तुभ्यं नमोऽस्तु मनसा वपुषा गिरा नः॥
किमत्र बहुना देवि जल्पितेन मया ननु।
यद् यदा वाञ्छितं सर्व्वफलदात्री नमोऽस्तु ते॥

॥ तारास्तुतिः॥

---

[1] ANb वेद०। [2] C ०जल०।

## 310.

ॐ नमः श्रीपीठताराये।

घण्टाखट्वाङ्गरक्तोत्पलमणिसुभगान् वामहस्तैर्वहन्त्या
बिभ्राणा वज्रकाद्यं स्फुरदसिडमरुभूषिता च सुवस्त्रा।
त्र्यक्षी कर्म्मेशा वरुणतनुरुडुपेता प्रमुदिता द्विवंशा (?)
पायात् सन्ध्याच दूर्व्वाकनकरुचिरसन्ताननना पीठतारा॥
पीतहरिद्रक्तशितारुणमेचका
पर्णधरा ऊषामतिबिम्बानना।
सुरताग्रा प्रपलिता वरपीठरता
डमरुकपालविभूषितसव्यकरा॥
ध्वजकेन च घण्टिकया परिचितवामकरा।
क्रमतोऽष्टहिता मणिवंशभवाः स्युरिमाः॥
वामे रक्तोर्द्ध्वदेहा हरितरुचिरसव्यार्द्धकाया वहन्त्या
सव्ये सचक्रवक्रा ध्वजरुधिरकपाले च वामे शशिस्था।
शिष्याद्या द्वादशान्याः[1] अपरपुटगताः स्वस्वनामाग्रवर्णोद्-
भूता कायैकशीर्षा भवभयविभवा देवता पातु युष्मान्॥
काम्बोजाद्याश्च तचाक्रदधिपसुजटौद्वारपाल्यो दिनेशे
सालीढा कर्त्रिपाचध्वजविधिशिरसः सव्यवामे वहन्त्या।
श्रद्धावांश्च स्मृतिध्यानविमलविभवः स्कन्धसंक्लेशदेव-
पुचप्रेतसमारक्षयक्लतिरुदयं विश्ववर्णा दिशन्तु॥

॥ इति पीठतारासाधनम्॥

---

[1] A ०श्चचर्य्याः।

311.

ॐ तारे तुत्तारे तुरे हुँ फट्, ॐ ताँ खाँ[1] हुँ फट्, ॐ आनन्द ॐ परमानन्द ॐ विरमानन्द ॐ सहजानन्द हुँ फट्, ॐ तारे तुत्तारे तुरे समग्रपीठाधिस्वामिनि समग्रपीठाधिसिद्धिं मे प्रयच्छ तुरे हुँ फट्। मध्ये ॐ सुरतेश्वरि हुँ फट्, ॐ सुरतसुन्दरि हुँ फट्, [2]ॐ सुरतचन्द्रि हुँ फट्, ॐ सुरतमालिनि हुँ फट्, ॐ सुरतभक्षणि हुँ फट्, ॐ सुरतकामिनि हुँ फट्, ॐ सुरतोग्रे हुँ फट्, ॐ सुरतोत्तमे हुँ फट्। ॐ शिखा हुँ फट्। ॐ भीमे हुँ फट्। ॐ शिखण्डी हुँ फट्। ॐ कराली हुँ फट्। ॐ जटिली हुँ फट्। ॐ रौद्री हुँ फट्। ॐ जटी हुँ फट्। ॐ चण्डी हुँ फट्। ॐ माण्डी हुँ फट्। ॐ विकटो[3]त्कटा हुँ फट्। ॐ किरिटी हुँ फट्। ॐ नर्त्तकी हुँ फट्। १२। ॐ कम्बोजी हुँ फट्, ॐ पुक्कशी हुँ फट्, ॐ चण्डोवी हुँ फट्, ॐ होमोही हुँ फट्। ४। इति पुष्पन्यासः।

ॐ नमो भगवति वज्रपीठेश्वरि विमानचक्रारविन्दचन्द्रमध्यगे महाकुलेश्वरि पञ्चकुलस्वभावे चतुर्मुखि द्वादशनेत्रे अष्टभुजे [4]वज्रचक्रघण्टासिरत्नकाद्यखट्वाङ्गकडमरूत्पलधारिणि अर्द्धपर्य्यङ्कनाव्यस्थे चतुर्विंशतियोगिनीपरिवृते करुणाक्रोधरूपिणि भक्तवत्सले दिव्योद्यानवासिनि सर्व्व-

---

[1] A खाँ।

[2] A omits ॐ सुरतचन्द्रि....सुरतकामिनि ॐ फट्।

[3] A ०कचो०।

[4] A omits वज्र०।

कामप्रदे सर्व्वार्थसाधनकरि आविश आविश प्रविश प्रविश हन हन सर्व्वविघ्नान् पच पच सर्व्वमारान् दह दह सर्व्वभूतवेतालकुम्भाण्डयक्षराक्षसपिशाचापस्मरदुष्टग्रहक्रूरादिसर्व्वरोगोपद्रवकारिडाकडाकिनीबालग्रहादीन् वज्रेण एषां हृदयं (यानि) भञ्ज भञ्ज मम मनोरथं परिपूरय देवी [1]तारे सर्व्वभूमी[2]श्वरि सोमार्क्कवह्निमये प्रभास्वरविग्रहे तथतैकरूपवति तुत्तारे तुभ्यं तुरे हुँ फट्।

॥ भगवत्या मालामन्त्रः॥

---

312.

ॐ नमः श्रीमहाकालाय।

मैत्र्यादिभावनापूर्व्वकशून्यतानन्तरं रेफोद्भवसूर्य्ये हुँकारसम्भवमात्मानं भगवन्तं षोडशभुजमहाकालं भावयेत् अष्टवदनं चतुर्विंशतिनेत्रं चतुश्चरणं षोडशभुजं [3]दक्षिणकरैः कर्त्त्रिवज्रगजचर्म्ममुद्गरत्रिशूलखड्गयमदण्डं वामकरै रक्तपूर्णकपालगजचर्म्मघण्टाङ्कुशश्वेतचामरडमरुनरशिरो दधानं शेषभुजाभ्यां प्रज्ञालिङ्गितं खर्व्वं कृष्णं[4] हाहा होहो हेहे [5]होहो-पूरितमुखं महारौद्रं त्रिकायात्मकं पञ्चबुद्ध-

---

[1] A तारये। [2] C ॰श्वरे।

[3] C omits. [4] A adds पानं after this.

[5] ANb omit होहो।

मुकुटिनं नरमुण्डमालाभरणं भवभयङ्करम्। पूर्व्वे महामाया महेश्वरा सिंहाक्रान्ता प्रत्यालीढपदस्थिता चतुर्भुजा वामे कपालं द्वितीये डमरुकं वादयन्ती दक्षिणे कर्त्त्रि द्वितीये मुद्गरं कृष्णवर्णा मुक्तकेशा त्रिलोचना विकटदंष्ट्रा च। दक्षिणे यमदूती नीलवर्णा चतुर्भुजा दक्षिणहस्ताभ्यां पद्मदण्डकर्त्त्रि[धरा] वामकराभ्यां रक्तपूर्णकपालचामरधृतवती प्रत्यालीढपदस्थिता यममहिषाक्रान्ता [1]नग्ना मुक्तकेशी। पश्चिमे कालदूती वामे कपालगोमुण्डं दक्षिणे मुद्गरत्रिशूलं अश्वारूढा प्रत्यालीढपदा रक्त[2]वर्णा मुक्तकेशी त्रिलोचनी। सर्व्वा देवत्यो विकटदन्ता नागाभरणभूषिताः। चतुष्कोणे चतुर्द्देव्यः— पूर्व्वदक्षिणकोणे कालिका कृष्णवर्णा द्विभुजा कर्त्त्रि-कपालहस्ता प्रत्यालीढपदस्थिता शवारूढा; [3]दक्षिण पश्चिमकोणे चर्च्चिका रक्तवर्णा कर्त्त्रिकपालहस्ता पूर्व्ववत् सर्व्वम्; पश्चिमोत्तरकोणे[4] चण्डेश्वरी पीतवर्णा शवारूढा चण्डमृगहस्ता प्रत्यालीढपदस्थिता; [5]उत्तरपूर्व्वकोणे कुलिशेश्वरी शुक्लवर्णा वज्रदण्डहस्ता शवारूढा प्रत्यालीढपदस्थिता। सर्व्वा देवत्यो नग्ना विकटदन्ता त्रिलोचना मुक्तकेशिन्यः। [6]एभिरष्टयोगिनीभिः परिवृतं शून्यतासमाधिस्थसद्‌ज्ञानन्दिकशवं प्रत्यालीढपदेन वज्रभैरवाक्रान्तं एवम्भूतं भगवन्तं ध्यात्वा मन्त्रं जपेत्। तत्रायं मन्त्रः—ॐ षोडशभुजाय हुँहुँ किलि किलि

---

[1] AC मग्ना।
[2] A ०र्णादिस्थिता।
[3] Nb नैर्‌ऋत्ये।
[4] Nb वायव्ये।
[5] Nb ईशाने।
[6] A एभिः परि०।

चण्डघोरदंष्ट्रोत्कटभैरवाय सर्व्वसिद्धिदायकाय हिलि हिलि किलि किलि हे स्वाहा। एतं मन्त्रं जपेत्।

अयं मन्त्रराजः सततं जपेन बुद्धत्व[1]मिहैव जन्मनि ददाति, जातिस्मरत्वमयुतजापेन, अष्टौ महासिद्धयः सिध्यन्ति। अथ बलिं दातुमिच्छति तदैव भगवन्तं सपरिवारं पुरतो भाव्य बलिमन्त्रेणाष्टौ बलिं दद्यात्। तत्रायं बलिमन्त्रः—ॐ नमो महाकालाय महादंष्ट्रोत्कटभैरवाय महाक्रोधाधिपतये पिङ्गोर्द्ध्वकेशाय षोडशभुजाय चतुर्विंशतिनेत्राय ॐ तुरु तुरु ख ख खाहि खाहि इदं बलिं गृह्ण गृह्ण हहा हिही हुहू हेहे [2]होहौ हंहः महावज्रबुद्धाय काये मां अधितिष्ठ तिष्ठ टट टट मट मट कट कट कारय कारय गर्जय गर्जय भीममहाक्रोधाधिपतये नाशय नाशय सर्व्वशत्रून् दुष्टसत्त्वदमक पालय पालय मां देहि देहि सर्वान् नाशय नाशय हुँ है किलि किलि भः हुँ हुँ सर्व्वयक्षपिशाचाश्च राक्षसकिन्नराश्च सर्व्वशान्तिं कुरु कुरु हं हः नाशय नाशय महाकालाय [3]कालरूपाय महाभयानकाय भीतं दम दम दमय दमय नाशनं सर्व्वदुष्टसत्त्वानुद्धरत नागाधिपतये तारय तारय नाशय नाशय तारय तारय हः हः कटः कटः खटः खटः फटः फटः च्छिन्द च्छिन्द हन हन दह दह पच पच मथ मथ नाशय नाशय घट घट सर सर चाँ क्रोधः स्वाहा। बलिमन्त्रः।

---

[1] A ०मिह बचमणि। [2] AC omit हो हौ। [3] ANb omit काल०।

अयं तन्त्रराजः। अनेन प्रतिदिनं रात्रौ मद्य-मांसेनोदारेण वारिपूर्णशरावे सम्पुटाञ्जलिं कृत्वा बलिं दातव्यम्। सर्व्वविघ्नं नाशयति सर्व्वशत्रून् पिशाचकारिकाः सत्त्वाः बलिदानात् नश्यन्ति च विलीयन्ते। अथानन्तरं दानादसाध्येऽपि यदीप्सितं तत् साध्यतां याति। ध्रुवं अष्टसिद्धिं साधयितुं समर्थो भवति। सर्वपिशाचाः सर्व्व-यक्षाः सर्व्वभूताः केवला देवासुरा मनुष्याश्च एते यदि [1]तदा पलायन्ते मूर्द्धानं स्फोटयति अन्तरीक्षं धावयति ध्रुवं स्वप्ने महाकालः शुभाशुभं कथयति, भूतभविष्य-द्वर्त्तमानं जानाति [2]दूराद्‌ध्येष्यति। सर्व्वबुद्धस्य मन्त्रराजस्य बलिदानेन पुण्यसम्भारं गणयितुं न समर्थो बुद्धो रात्रि-न्दिवमविच्छिन्नधारया देवा अपि तत् पुण्यं गणयितुं न समर्थाः। चतुरशीतिधर्म्मस्कन्धानां सारोऽयं मन्त्रराजः। रुजे यदि न सिध्यति मधु कृत्वा अस्थिना लिखेत् विद्याम्। हस्ते धारयति स्पर्शयति नाशयति रोगदुर्भिक्षमडक-कान्तारीप्राणापानकान्तारादीन्। शरीरेण प्रभवति सहस्रायुः महाकालसमं किं पुनर्वचनैः। बलिमन्त्रराजोऽयं विद्या अनेन मन्त्रेण शताभिमन्त्रितं पानीयं गुर्व्विणीं पाययति सुखेन प्रसवति ध्रुवं सहस्रायुः। नानाभय-पीडितानि नाशयति। पठनात् नश्यति। अमृतैर्वारैकं सपाठं चक्षुरुभयमञ्जयेत्, श्रीनरव्याघ्राश्वगजमहिषाहि-कुक्कुरशलभसिंहादयश्च यान्ति ध्रुवं सर्व्वकार्य्यं प्रसाध्य

---

[1] Nb तत्पराः यन्ते, A उत्पलाद्यन्ते।

[2] Nb दूराद्दृश्यते।

प्रविशन्ति। सर्व्वबुद्धसमः षोडशभुजस्य बलिमन्त्रः। शताक्षरं पठेत्। क्षमापनबलिविसर्ज्जनः।

॥ [1]इति षोडशभुजमहाकालसाधनं समाप्तम्[2]।

। विरूपाक्षः ॥

॥ साधनमाला समाप्ता ॥

---

[1] The colophon is found only in Nb.

[2] After this colophon C adds शुभम्भूयात्। संवत् ९३९ श्रावण शुक्लपञ्चमीकुन्हुय क्वाथ वाहालया श्रीवज्राचार्य्य अमृतानन्दन चोयाजुलो शुभं। This Newari date corresponds to A.D. 1819. A abruptly brings in long extracts from the महाकालतन्त्र extending over nine folia from 333 to 341 and concludes with part of the सप्तशतिककल्पोक्तसाधन followed by the त्रैलोक्यविजय-साधन and वज्रज्वालानलार्कसाधन।

## अ

## आ



## इ



## ई



## उ

## घ



## च

## द



## ध

## न



## प

## फ



## ब

## भ

## य



## र

श

## श्र



## ष

## स

## ह

# ERRATA.

| Page, | Line, | For, | Read, |
|---|---|---|---|
| | | Vol. I. | |
| 7 | 7 | नमःस्त्रै॰ | नमस्त्रै॰ |
| 14 | 4 | भच्चणीया | भञ्जनीया |
| 15 | 11 | समन्तिनी- | समन्तिनी |
| 17 | 5 | सुद्रादिषु गौ॰ | सुद्रादिष्वगौ* |
| ,, | 7 | सुशीलानपराधयोः | सुशीले नापराधयेत्* |
| ,, | 8 | न कार्यं | नाकार्यं* |
| 28 | 3 | ॰वज्रमा | ॰वज्र मा |
| 48 | 5 | मेकवारधा॰ | ॰मेकवारं धा॰ |
| 57 | 12 | तदनन्तरम॰ | तदनन्तरं |
| 61 | 18 | ॰मन्त्रभग॰ | ॰मन्त्र भग॰ |
| 67 | 13 | नीयं। | नीयम्। |
| 68 | 10 | ॰भावान्। | ॰भावान् |
| 82 | 16 | सिद्धि॰ | सिद्ध॰ |
| 110 | 5 | तान्तं | दान्तं |
| 115 | 16 | ॰रिति | ॰रिति। |
| 122 | 5 | श्वरपचनधीः | श्वरपचन धीः |
| 160 | 3 | सत्त्ववर्तौ | सत्यवर्तौ |
| 169 | 5 | तान्त॰ | दान्त॰ |
| 180 | 19 | .. | After स्वाहा। add [यां यां इच्छति तां तां वशमानयति।] |
| 182 | 14 | स्वयं न | स्वपतिं |
| 183 | 17 | योगवरेण | योगीवरं न |
| 189 | 18–20 | मोहवज्रां .. .. रागवज्रिकाम् | [मोहवज्रां न्यसेन्नेत्रे द्वेषवज्रां च कर्णतः। मात्सर्यिकां तथा घ्राणे वक्त्रे तु रागवज्रिकाम्॥] |
| 208 | 15 | ह्रौँ | ह्रौँः |
| 235 | 16 | योगवरेण | योगीवरं न |
| 239 | 16 | खट्वा॰ | खड्गा॰ |
| 251 | 18 | ततो दक | ततोदक |
| 258 | 2, 9, 19, 20 | ह्रौँ | ह्रौँः |
| 260 | 12 | चैतद्युक्तं | चैतदुक्तं |
| 261 | 8 | ॰स्थानरक्ता | ॰स्थानरचा |

* Suggested by Pandit V. Bhattacharyya in *IHQ Vol. III*, p. 428.

| Page, | Line, | For, | Read, |
|---|---|---|---|
| | | Vol. II. | |
| 264 | 5 | साद्यच्चर० | साद्रींच्चर० |
| ,, | 15 | | |
| 265 | 9 | ह्रौँ | ह्रौँः |
| 266 | 14 | | |
| 290 | 8 | पञ्चोपहारा० | पञ्चोपचारा० |
| 297 | 7 | ०मद्धेतुतः | ०मद्धेतुकम् |
| 315 | 6 | पूजोपहा० | पूजोपचा० |
| 323 | 10 | रत्नास्त्र, रत्न० | रत्नाम्बरत्न० |
| 335 | 2 | मेधापरो | मेधा परे |
| 338 | 4 | ब्रह्माब्ज० | ब्रह्मास्य० |
| 365 | 12 | ०सिद्धौ० | ०मिद्धौ० |
| 391 | 1 | पञ्चमौलौ | पञ्च मौलौ |
| 418 | 19 | ०हृदयामन्त्रः | ०हृदयमन्त्रः |
| 438 | 10 | बलिम् | बलिं |
| 458 | 17 | ०पहार० | ०पचार० |
| 459 | 9 | ०रधोवज्र० | ०रधो वज्र० |
| 462 | 5 | उत्पद्यवे । | उत्पद्यते |
| ,, | 7 | पञ्चोपहार० | पञ्चोपचार० |
| 476 | 5 | ०रूपदर्शक० | ०रूपादर्शक० |
| 505 | 2 | झटित्येषा | झटित्येष |
| 512 | 5 | ०पताकधरं | ०पताकाधरं |
| 533 | 3 | ०चन्द्रा० | ०[ पंचा ]० |
| 536 | 16 | पुण्यप्राप्त० | पुण्यं प्राप्त० |
| 538 | 3 | ०नुदित० | ०मुदित० |
| 543 | 12 | ०द्म्रौं | ०द्म्रौं । |
| 573 | 9 | ऊँकार० | ओँकार० |
| 584 | 10 | ०हारैः | ०चारैः |
| 590 | 7 | तत्पुण्यं | यत्पुण्यं |
| 595 | 4 | च्याच्चौ | च्यच्चौ |
| In all instances | | ऊँ | क्रँ |

# GAEKWAD'S ORIENTAL SERIES.

**Critical editions of unprinted Sanskrit Works, edited by competent scholars, and published by the Oriental Institute, Baroda.**

BOOKS PUBLISHED.

Rs. A.

1. **Kāvyamīmāṁsā :** a work on poetics, by Rājaśekhara (880–920 A.D.) : edited by C. D. Dalal, and R. Anantakrishna Sastry, 1916. Re-issue. 1924 .. .. 2–4

*This book has been set as a text-book by the Bombay and Patna Universities.*

2. **Naranārāyaṇānanda :** a poem on the Paurāṇic story of Arjuna and Kṛṣṇa's rambles on Mount Girnar, by Vastupāla, Minister of King Vīradhavala of Dholka, composed between Samvat 1277 and 1287, *i.e.*, A.D. 1221 and 1231 : edited by C. D. Dalal and R. Anantakrishna Sastry, 1916 .. .. .. *out of print.*
3. **Tarkasaṅgraha :** a work on Philosophy (refutation of Vaiśeṣika theory of atomic creation) by Ānandajñāna or Ānandagiri. the famous commentators on S'aṅkarācārya's Bhāṣyas, who flourished in the latter half of the 13th century : edited by T. M. Tripathi, 1917 .. 2–0
4. **Pārthaparākrama :** a drama describing Arjuna's recovery of the cows of King Virāṭa, by Prahlādanadeva, the founder of Pālanpur and the younger brother of the Paramāra king of Chandrāvatī (a state in Mārwār), and a feudatory of the kings of Guzerat, who was a Yuvarāja in Samvat 1220 or A.D 1164 : edited by C. D. Dalal, 1917 .. .. .. .. 0–6
5. **Rāṣṭrauḍhavaṁśa :** an historical poem (Mahākāvya) describing the history of the Bāgulas of Mayūragiri, from Rāṣṭrauḍha, king of Kanauj and the originator of the dynasty, to Nārāyaṇa Shāh of Mayūragiri by Rudra Kavi, composed in S'aka 1518 or A.D. 1596 : edited by Pandit Embar Krishnamacharya with Introduction by C. D. Dalal, 1917 .. .. .. 1–12
6. **Liṅgānuśāsana :** on Grammar, by Vāmana, who lived between the last quarter of the 8th century and the first quarter of the 9th century : edited by C. D. Dalal, 1918 .. .. .. .. 0–8
7. **Vasantavilāsa :** an historical poem (Mahākāvya) describing the life of Vastupāla and the history of

Rs. A.

Guzerat, by Bālachandrasūri (from Moḍheraka or Moḍhera in Kaḍi Prant, Baroda State), contemporary of Vastupāla, composed after his death for his son in Samvat 1296 (A.D. 1240): edited by C. D. Dalal, 1917. 1–8

8. **Rūpakaṣaṭkam**: six dramas by Vatsarāja, minister of Paramardideva of Kalinjara, who lived between the 2nd half of the 12th and the 1st quarter of 13th century: edited by C. D. Dalal, 1918 .. .. 2–4

9. **Mohaparājaya**: an allegorical drama describing the overcoming of King Moha (Temptation), or the conversion of Kumārapāla, the Chalukya King of Guzerat, to Jainism, by Yaśaḥpāla, an officer of King Ajayadeva, son of Kumārapāla, who reigned from A.D. 1229 to 1232: edited by Muni Chaturvijayaji with Introduction and Appendices by C. D. Dalal, 1918 .. 2–0

10. **Hammīramadamardana**: a drama glorifying the two brothers Vastupāla and Tejaḥpāla and their King Vīradhavala of Dholka, by Jayasiṁhasūri, pupil of Vīrasūri, and an Ācārya of the temple of Munisuvrata at Broach, composed between Samvat 1276 and 1286 or A.D. 1220 and 1239: edited by C. D. Dalal, 1920. 2–0

11. **Udayasundarīkathā**: a romance (Campū, in prose and poetry) by Soḍḍhala, a contemporary of and patronised by the three brothers Chchittarāja, Nāgārjuna, and Mummuṇirāja, successive rulers of Konkan, composed between A.D. 1026 and 1050: edited by C. D. Dalal and Pandit Embar Krishnamacharya, 1920 .. 2–4

12. **Mahāvidyāviḍambana**: a work on Nyāya Philosophy, by Bhaṭṭa Vādīndra who lived about A.D. 1210 to 1274: edited by M. R. Telang, 1920 .. .. 2–8

13. **Prācīnagurjarakāvysaṅgraha**: a collection of old Guzerati poems dating from 12th to 15th centuries A.D.: edited by C. D. Dalal, 1920 .. .. 2–4

14. **Kumārapālapratibodha**: a biographical work in Prākṛta, by Somaprabhāchārya, composed in Saṁvat 1241 or A.D. 1195: edited by Muni Jinavijayaji, 1920. 7–8

15. **Gaṇakārikā**: a work on Philosophy (Pāśupata School) by Bhāsarvajña who lived in the 2nd half of the 10th century: edited by C. D. Dalal, 1921 .. .. 1–4

16. **Saṅgītamakaranda**: a work on Music by Nārada: edited by M. R. Telang, 1920 .. .. .. 2–0

17. **Kavīndrācārya List**: list of Sanskrit works in the collection of Kavīndrācārya, a Benares Pandit (1656 A.D.): edited by R. Anantakrishna Shastry, with a foreword by Dr. Ganganatha Jha, 1921 .. .. 0–12

18. **Vārāhagṛhyasūtra**: Vedic ritual (domestic) of the Yajurveda: edited by Dr. R. Shamasastry, 1920 .. 0–10

19. **Lekhapaddhati**: a collection of models of state and private documents, dating from 8th to 15th centuries

Rs. a.

A.D.: edited by C. D. Dalal and G. K. Shrigondekar, 1925 .. .. .. .. .. 2–0

20. **Bhavişayattakahā or Pañcamīkahā**: a romance in Apabhraṁśa language by Dhanapāla (*circa* 12th century): edited by C. D. Dalal, and Dr. P. D. Gune, 1923. 6–0

21. **A Descriptive Catalogue of the Palm-leaf and Important Paper MSS. in the Bhandars at Jessalmere,** compiled by C. D. Dalal, and edited by Pandit L. B. Gandhi,1923 .. .. .. 3–4

22, 23. **Paraśurāmakalpsūtra**: a work on Tantra, with commentary by Rāmeśvara and Paddhati by Umānanda: edited by A. Mahadeva Sastry, B.A. 2 vols., 1923. 11–0

24. **Tantrarahasya**: a work on the Prābhākara School of Pūrvamīmāṁsā, by Rāmānujācārya: edited by Dr. R. Shamasastry, 1923 .. .. .. 1–8

25, 32. **Samarāṅgaṇa**: a work on architecture, town-planning and engineering, by king Bhoja of Dhara (11th century): edited by Mahamahopadhyaya T. Gaṇapati Shastri, Ph.D. 2 vols., 1924-1925 .. 10–0

26, 41. **Sādhanamālā**: a Buddhist Tāntric text of rituals, dated 1165 A.D. consisting of 312 small works, composed by distinguished writers: edited by Benoytosh Bhattacharyya, M.A., Ph.D. 2 vols., 1925–1928 .. 14–0

27. **A Descriptive Catalogue of MSS. in the Central Library, Baroda.** Vol. 1 (Veda, Vedalakṣaṇa and Upaniṣads), compiled by G. K. Shrigondekar, M.A. and K. S. Ramaswāmi Shastri, with a Preface by Dr. B. Bhattacharyya, Ph.D. 1925 .. .. 6–0

28. **Mānasollāsa or Abhilaṣitārthacintāmaṇi**: an encyclopædic work divided into one hundred chapters, treating of one hundred different topics by Someśvaradeva, a Chalukya king of the 12th century: edited by G. K. Shrigondekar, M.A., 3 vols. vol. I. 1925 .. 2–12

29. **Nalavilāsa**: a drama by Rāmchandrasūri, pupil of Hemachandrasūri, describing the Paurāṇika story of Nala and Damayantī: edited by G. K. Shrigondekar and L. B. Gandhi, 1926 .. .. .. 2–4

30, 31. **Tattvasaṅgraha**: a Buddhist philosophical work of the 8th century by S'āntarakṣita, a Professor at Nālandā with Pañjikā (commentary) by his disciple Kamalaśīla, also a Professor at Nālandā: edited by Pandit Embar Krishnamāchārya with a Foreword in English by Dr. B. Bhattacharyya, M.A. Ph.D. 2 vols. 1926 .. .. .. .. .. 24–0

33, 34. **Mirat-i-Ahmadi**: with its Khatimae or Supplement: By Ali Mahammad Khan, the last Moghul Dewan of Gujarat: edited in the original Persian by Syed Nawabali, Professor of Persian, Baroda College, 3 vols. (vol. I and III in the Press), vol. II. 1926 .. 12–0

Rs. A.

35. **Mānavagṛhyasūtra**: a work on Vedic ritual (domestic) of the Yajurveda with the Bhāṣya of Aṣṭāvakra: edited with an introduction in Sanskrit by Pandit Rāmakrishna Harshaji S'āstrī, with a Preface by Prof. B. C. Lele, 1926 .. .. .. .. 5-0

36. **Nāṭyáśāstra**: of Bharata with the commentary of Abhinavagupta of Kashmir: edited by M. Ramakrishna Kavi, M.A. 4 vols, vol. I, illustrated, 1926 .. 6-0

37. **Apabhraṁs'akāvyatrayī**: consisting of three works, the Carcarī, Upadeśarasāyana and Kālasvarūpakulaka, by Jinadatta Sūri (12th century) with commentaries: edited by L. B. Gandhi, 1927 .. .. .. 4-0

38. **Nyāyapraveśa,** Part I (Sanskrit Text): on Buddhist Logic of Dinnāga, with commentaries of Haribhadra Sūri and Pārśvadeva: edited by Principal A. B. Dhruva, M.A., LL.B., Pro-Vice-Chancellor, Hindu University, Benares .. .. .. *Shortly.*

39. **Nyāyapraveśa,** Part II (Tibetan Text): edited with introduction, notes, appendices, etc., by Pandit Vidhusekhara Bhattacharyya, Principal, Vidyabhavana, Visvabharati, 1927 .. .. .. .. 1-8

40. **Advayavajrasaṅgraha**: consisting of twenty short works on Buddhist philosophy by Advayavajra, a Buddhist savant belonging to the 11th century A.D., edited by Mahāmahopādhyāya Dr. Haraprasad Shastri, M.A., C.I.E., Hon. D. Litt. 1927 .. .. 2-0

42. **Kalpadrukośa**: standard work on Sanskrit Lexicography by Keśava: edited with an elaborate introduction and indexes by Pandit Ramavatara Sarma, M.A., Sahityacharya of Patna. In two volumes, vol. I, 1928. 10-0

43. **Mirat-i-Ahmadi Supplement**: by Ali Muhammad Khan. Translated into English from the original Persian by Mr. C. N. Seddon, I.C.S. (retired) and Prof. Syed Nawab Ali, M.A. Corrected Re-issue, *shortly*. .. 6-8

## BOOKS IN THE PRESS.

1. **Rāmacarita** of Abhinanda, Court poet of Hāravarṣa (cir. 9th century A.D.): edited by K. S. Ramaswami Shastri.

2. **Nāṭyadarpaṇa**: on dramaturgy by Ramacandra Suri with his own commentary: edited by Pandit L. B. Gandhi and G. K. Shrigondekar, M.A.

3. **Nātyaśāstra**: Vol. II. edited by M. Ramakrishna Kavi.

4. **Jayākhyasaṁhitā**: an authoritative Pāñcharātra work: edited by Pandit E. Kṛṣṇamacaryya of Vadtal.

5. **Buddhist works on Logic**: containing reconstructed texts from Chinese, Tibetan texts and English translation of Chinese texts of ancient authors like Nāgārjuna Vasubandhu, etc. by Prof. Giuseppe Tucci of Italy.

Rs. A.

6 **Mānasollāsa** or Abhilaṣitārthacintāmaṇi, vol. II. edited by G. K. Shrigondekar, M.A.

7. **A Descriptive Catalogue of MSS. in the Oriental Institute, Baroda,** vol. II (S'rauta, Dharma and Gṛhya Sūtras) compiled by the Library staff.

8. **A Descriptive Catalogue of MSS. in the Jain Bhandars at Pattan** ; edited from the notes of the late Mr. C. D. Dalal, by Pandit L. B. Gandhi, 2 vols.

9. **Bhāvaprakāśana** of S'āradātanaya : an ancient work on Dramaturgy : edited by Pandit Ramaswami Shastri, Oriental Institute, Baroda and His Holiness Yadugiri Yatiraja Swami, Melkot.

10. **Prajñopāyaviniścayasiddhi** of Anaṅgavajra and **Jñānasiddhi** of Indrabhūti : two important works belonging to the little known Vajrayāna school of Buddhism (8th century A.D.): edited by Dr. B. Bhattacharyya, Ph.D.

11. **Siddhāntabindu :** on Vedānta philosophy by Madhusūdana Sarasvatī with commentary of Puruṣottama : edited by P. C. Divanji, M.A., LL.M.

12. **Tathāgataguhyaka or Guhyasamāja :** the earliest and the most authoritative work of the Tantra School of the Buddhists : edited by Dr. B. Bhattacharya, Ph.D., Director, Oriental Institute, Baroda.

13. **Influence of Portuguese on the Asiatic Languages :** Translated into English from Portuguese by Prof. A. X. Soares, M.A., Baroda College, Baroda.

14. **Persian Chronicle :** history of the Safvi Period of Persian History 15th and 16th centuries by Hasan Ramlu : edited by C. N. Seddon, I.C.S. (*retired*), Reader in Persian and Marathi, University of Oxford.

15. **Nañjarājayaśobhūṣaṇa :** by Nṛsiṁhakavi *alias* Abhinava Kalidāsa, a work on Sanskrit Poetics and relates to the glorification of Nañjarāja, son of Vīrabhūpa of Mysore : edited by E. Krishnamacharya.

**PUBLISHED BY THE GOVERNMENT OF H.H. THE MAHARAJA GAEKWAD OF BARODA.**

**Gazetteer of the Baroda State.** By Rao Bahadur Govindbhai H. Desai, B.A., LL.B., Naeb Dewan, Baroda State, and the late Principal A. B. Clarke, B.A. With map. 2 volumes, 1923, each Rs. 15.

**Census of India, 1921, Vol. XVII, Baroda.** By Satyavrata Mukerjea, B.A., Subah, Baroda Division, formerly Superintendent of Census Operations, Baroda State.

In three parts 1921-22—

| | Rs. | As. | P. |
|---|---|---|---|
| Part I Report .. .. | 16 | 8 | 0 |
| ,, II Imperial Tables .. .. | 9 | 0 | 0 |
| ,, III State Tables .. .. | 4 | 8 | 0 |



**Mirat-i-Ahmadi,** the Original Persian Text. Edited by Professor Nawab Ali. In 3 volumes.

(*Gaekwad's Oriental Series. Vol. II, 1927, Rs. 12. Vols. I and III are in the Press.*)

**English Translations** of Vols. I and II are also in preparation.